सूलं २ मूलावशेषं १० मूलधनं ८ सैकमूल ३ धनं २७ धनयो ८।२७ रन्तरेण १९ संमूलावशेषंजातं $\frac{१०}{१९}$ मूलयुतंजातं $\frac{४८}{१९}$ हार२ भक्तंजातंभिन्नधने निकटमूलं $\frac{४८}{३८}$ सूक्ष्ममूलानयनंतुज्योत्पत्तिस्थानेकथया-मि **अथाऽकरणीगतेष्टभुजात्कर्णकोटिरच्यनो-च्यते.** इष्टाप्तमिष्टदोर्वर्गलब्धमिष्टाद्यवर्जितं १५४ कृत्वाखण्डे भवेतांतोकर्णकोटीत्वनेकधा इष्टयोर्वर्गभेदन्तुबाहुः स्यादिष्टयोस्तयोः १५५ वर्गयोगन्तुतत्कर्णस्यात्तच्चाऽकरणीगतं व्येकेनह्रीष्टवर्गेण भक्तं द्विघ्नेष्टताडितं १५६ दोः संज्ञंस्यात्तुकोटिस्साविष्टघ्नीतद्भुजोनिता तज्जात्यंजायतेकर्णंचाथकर्णंयमाहृतम् १५७ ह्रीष्टघ्नंत्विष्टवर्गेणसैकेनाप्तन्तुजायते कोटिकोटिगुणंत्विष्टं कृत्वातच्छ्रवणोन्तरम् १५८ दोः स्याद्वात्विष्टयोर्घातंद्विघ्नंकोटिस्तदुच्यते उदाहरणं यत्रस्वेष्टभुजंद्वादशांतत्रकर्णकोटीवद न्यासः इष्टभुजः १२वर्गः १४४ इष्ट २ भक्तः ७२ इष्टेन २ युक्तोनार्द्धीकृतः कर्ण

कोटी ३७।३५ एवमिष्टवशाद्बहुधाकर्णकोटी स्यातां अथवा इष्टं भुजमिष्टकोटिरितिज्ञात्वा उक्तवत्कृत्वा कर्ण भुजौस्याताम् अथप्रकारान्तरेणेष्टकर्णाद्भुजकोट्योरा नयनम् इष्टवर्गेणसैकेन द्विघ्नकर्णोविभाजितं १५९ फ-लमिष्टाहतंदोः स्यात्कोटिः कर्णफलान्तरं उदाहरणम् यत्रतिथिमितंकर्णंतत्रभुजकोटीवद न्यासः कर्णः १५ द्विघ्नः ३० इष्टः २ वर्गः ४ इष्टवर्गेणसैकेन ५ द्विघ्नकर्णः ३० भक्तःफलं ६ इष्टाहतंफलं १२ भुजः १२ फलकर्णा न्तरंकोटिः ९ इष्टवशाद्बहुधा.

## अथकर्णकोटियुतिबाहुभ्यांकर्णकोटिज्ञान मथवा भुजकर्णैक्यकोटिभ्यां कर्णभुजानयनं विरच्यते

कोटिवर्गोथवाबाह्वोर्वर्गः खण्डोचितोऽङ्कतः १६० लब्ध्या खण्डोचितेद्विस्थेहीनयुक्तेदलीकृते खण्डे द्वे खण्डयोग स्यविज्ञेयेदोः श्रवाकृती (भुजकर्णरूपे) १६१ तेकोटिकर्णरूपेवांझे येखण्डे विचक्षणैः यस्यखण्डानिखण्डेवास्युस्तत्रव-

एडोचितोच्यते १६२ उदाहरणं अष्टकरतुल्यदीर्घवं- शोवायुनैकदेशेभग्नः स्वमूलादब्धिकरे भुजेतदग्रख एडः श्रुतिरूपलग्नश्चेत्कर्णकोटिरूपेवंशखण्डे वद न्या- सः

३ ८ ५ ४

बाहुः ४ वर्गः १६ खण्डोचितेन ८ भक्तः फलं २ अतोवंशखण्डे कोटिकर्णरूपे कोटिः ३ कर्णः ५ उदाहरणं शिवमन्दिराद्वाविंशद्धस्त भूमौ पूर्वस्यांविष्णुमन्दिरं शिवमन्दिरात्षोडशहस्तोन्मि- तेयाम्येब्रह्ममन्दिरं शिवविष्णुमन्दिरान्तरे कस्मिंश्चि- दज्ञातस्थाने गणपतिमन्दिरं गणपतिविष्णुमन्दिरान्त रसमं गणपतिब्रह्ममन्दिरान्तरंचेत् शिवगणेशमन्दिरा न्तरं तथाविष्णुगणेशगृहान्तरं तथाब्रह्मगणेशगृहान्त- रंवद न्यासः

शिव गृह ३२ गणपतिगृ० ३२ वि ष्णुगृह १६ २० ब्रह्मगृह

कोटिः १६ खण्ड- योग्यः ३२ उक्तवत् शिवगणेशा न्तरं १२ विष्णुगणेशान्तरं २० ब्रह्मगणेशान्तरम् २० **अथकोटिकर्णान्तरबा- हुभ्यांकोटिकर्णयोरानयनम्** . कोटिकर्णा-

न्तरेणाप्तंदोर्वर्गकोटिकर्णयोः विश्लेषेणोनयुक्तोर्द्धिता-
वुक्तौकोटिकर्णकौ १६३ उदाहरणं कोटिकर्णान्तरमे-
कार्द्धं यत्रबाहुर्यमोन्मितंतत्रकोटिकर्णौवद न्यासः को-
टिकर्णयोरन्तरं $\frac{१}{२}$ बाहुः २ उक्तवत्कोटिकर्णौ | $\frac{१५}{४}$ ८ $\frac{१७}{४}$ |

## अथोड्डीयमानानयनम्

द्विघ्नकोटियुतेनैववाहुना परिभाजितं बाहुंकोटद्याहृ-
तंकृत्वाह्युड्डीयंतन्निगद्यते १६४ उदाहरणं वेदोन्मि-
तेकोटिरूपे कपिद्वयंगतमेकःपथेनान्यः किंचिदूर्ध्वंग-
त्वाकर्णरूपोष्टोन्मिते भुजे उत्तीर्यतयोः समगमनंचेदु-
ड्डीयमानंवद न्यासः ६ ४ १० ८ भुजः ८ कोटिः ४
समगतिः १२ लब्धमुड्डीयमानं २ कोटिः ६ भुजः ८ क-
र्णः१०

## अथान्यत्करणविधिः

दोःकोटियुतिवर्गोनात्कर्णवर्गाद्द्यमाहृतात् मूले द्विस्थे
न्तरंयोगं योगेनाप्तिविभाजिते १६५ स्यातांतौकोटि-
बाहूवाकर्णवर्गाद्द्यमाहृतात् दोःकोटिभेदवर्गोनान्मू-
लेद्विस्थेन्तरेणाच १६६ भेदंयोगंदलेकृत्वातत्रैकभ

स्मरेन्दुजम् अन्यत्रैवस्मरेत्कोटिं तत्सिद्धिः स्याद्यथात
था १६७ उदाहरणं यत्र पंचोन्मितंकर्णंभुजकोटियो-
गंनगंतत्रबाहुंकोटिंचवद न्यासः

| को ४ | क ५ |
|---|---|
| | भु ३ |

कर्णः
५ दोः कोटियोगः ७ ज्ञाते कोटिभुजे ४। ३ वा कर्णः ५
भुजकोटयन्तरं १ ज्ञाते कोटिभुजे ४। ३ अथवा भुजः
३ कोटिः ४ . **अथकर्णयोर्योगाल्लम्बादिपरिज्ञानं**
तुल्यभूमिस्थलेवेण्वोरन्योन्यमग्रमूलयोः सूत्रयोग
स्थलाद्वेण्वोर्घातंवंशैक्यभाजितं १६८ लम्बः स्या-
न्निजवंशघ्ना पृथ्वीवंशैक्यभाजितास्वाबाधाभूमिख-
ण्डः स्याल्लम्बान्दूलम्बयोर्वधं १६९ स्वाबाधाभाजितं
लब्धमन्यवंशसुदीरितम् स्वाबाधालम्बवर्गैक्यमूलं
कर्णांशकं भवेत् १७० पृथ्वीकर्णांशयोर्घातंतस्या
बाधोद्धृतं फलम् पूर्णकर्णोच्यते पूर्णकर्णतल्लम्ब-
मर्दितम् १७१ कर्णांशेनोद्धृतंलब्धंतद्वंशंसमुदीरि-
तम् उदाहरणं रामषण्मितयोर्वंशयोःपरस्पर मूला-
ग्रगयोः सूत्रयोर्योगस्थानाल्लम्बादिकान्वद न्यासः

वंशौ ६।३ योगः ९ लब्धः २ वंशान्तरभूमिः १२ चेल्लम्बादुभयत्र भूखण्डे ८।४ वाभू १८ श्चेदाबाधे भूखण्डे १२।६ भूवशाद्वद्धुधा भूखण्डे स्यातां

## अथाऽक्षेत्रविचारः

यत्रैवलघुदोर्योगितुल्यंवाल्पंमहाभुजात् १७२ ऋजुदोः क्षेत्रमक्षेत्रंविज्ञेयंधृष्टभाषितम् उदाहरणं यत्र चतुर्भुजे द्वादशद्वित्रितर्कोन्मिताः भुजाः त्रिकोणेष्टाश्वि रसोन्मिताः भुजाः धृष्टेणोद्दिष्टास्तत्रतदक्षेत्रंज्ञेयंहि न्यासः

वा १२
६ २ ३ ६
२ ८ ८ २ ६ अथवा
चतुर्भुज
त्रिभुज ६

बहुभुजं १२ लघु २।३।६ योगं ११ वा बहुभुजः ८ लघु २।६ योगं ८ अथवा भुजशलाकया अक्षेत्रोपपत्तिः

## अथ त्र्यस्रक्षेत्रफलानयनमुच्यते

क्षेत्रे त्र्यस्रे स्मरेदेकं बाहुं भूरिति पण्डितैः १७३ त्र्यस्रेतद्भुजयोर्योगं भेदघ्नं तद्भुजोद्धृतं द्विस्थालब्ध्याधराहीं-

नयुक्तातद्दलितातयोः १७४ आबाधे भुजयो र्भूमेःखण्डे ज्ञेये विचक्षणैः स्वाबाधाबाहुकृत्योस्त्कयद्विश्लेषा सदं भवेत् १७५ तल्लम्बं भुजयो रत्रयोगात्कोटिसमं भवेत् तद्भूलम्बाहतेरर्द्धं त्र्यस्रे क्षेत्रफलं भवेत् १७६ सर्वबाह्वैक्यखण्डंतुलिखित्वाऽब्धिस्थलेषु च हित्वैकैकं स्थले बाहून् शेषघातपदं स्फुटं १७७ त्र्यस्रे क्षेत्रफलं ज्ञेयं चतुर्बाह्वादिकेतथा क्षेत्रे क्षेत्रफलं स्थूलं विज्ञेयं पण्डितोत्तमैः १७८ उदाहरणं त्र्यस्रे शक्रमिते भूमौ वाहू विंशतिथीसमौ यत्रतत्र क्षेत्रफलं वद न्यासः भूः१४

भुजौ १३।१५ लब्धे आबाधे ५।९ लम्बश्च १२ क्षेत्रफलम् ८४ अथ ऋणावाधोदाहरणं नवतुल्यक्षितौ सप्तदशदशमितौ बाहू यत्रतत्र त्र्यस्रे क्षेत्र फलं वद न्यासः भुजौ

१७।१० भूमिः ९ अत्रनिर्वाहार्थं सप्तदशोन्मितं भुजं १७ भूरितिज्ञात्वा तत्र नवदशौ बाहू स्मृत्वा ९।१०

न्यासः भूः १७ बाहू ९।१० आबाधे १३५/१७ १५४/१७ लम्बः ७२/१७ क्षेत्र फलं ३६ अथवा सर्वभूमिः १५ अर्थात्पृथ्वीऋणाबाधयो र्योगं १५ तल्लम्ब ८ घ्नमर्द्धं ६० तत्सर्णाबाधासहितस्य क्षेत्रफलं ६० तस्मिन् ऋणाबाधैव भूस्य ६ दर्द्धं ३ लम्बा८ हतं कृत्वाजातमृणक्षेत्रफलं २४ तं हित्वाजातं क्षेत्रफलं ३६ अथवा भुजौ १०।१७ भूमिः ९ अस्त्रे तद्भुजयो र्योगमित्यादिनालब्धं २१ अनेन भूरूनान स्यात् अस्मादेव भूरपनीताशेषार्द्धं मृणगताबाधादिग्वैपरीत्येने-त्यर्थः तथाजाते आबाधे ६।१५ अतउभयत्रापिजातो-लम्बः ८ फलंच ३६ अथवा ९।१०।१७ बाहूनां योगा ३६ र्द्धं १८ चतुःस्थितं १८।१८।१८।१८ बाहुभिः ९।१० ।१७ र्विरहितशेष ९।८।१।१८ वधा १२९६ न्मूलं ३६ स्फुटं क्षेत्रफलम् ३६ ऋणाबाधास्थले प्रकारान्तरेण फलानयनं   त्र्यस्रे तु भुजयोर्भेदं योगनिघ्नं भुवोद्धृतम्

चेत्फलं भूमिनघ्नोर्द्ध भूमिंहित्वाफलेदलं १७९ जायते साक्षयाबाधाभूफलैक्यदलंतथा आबाधात्वधिकस्यैव बाह्वोर्ज्ञेयाविचक्षणैः १८० स्यावाधाबाहुरुत्योस्तुभेदमूलंतुयद्भवेत् तल्लम्बमुच्यतेतेनचावाधेगुणितेपृथक् १८१ विश्लेषार्द्धतयोस्तत्रत्र्यस्त्रक्षेत्रफलं भवेत्

**अथचतुर्भुजादिक्षेत्रेफलानयनविधिः**

चतुर्बाह्वादिकेक्षेत्रेबुद्ध्याव्यस्त्रान्यमादिकान् १८२ रुत्वातत्रततस्तेषांव्यस्त्राणांफलसंयुतिं रुत्वाक्षेत्रफलंतस्यक्षेत्रस्यैवहिजायते १८३ त्र्यस्त्रेलम्बसमीपस्यकर्णरूपभुजस्यच वर्गेलम्बरुतिंहित्वामूलं भूखण्डमुच्यते १८४ आबाधासिद्धबाहुस्तुतद्भूखण्डमुदीरितम् कोटिंलम्बाभिधंज्ञेयंकर्णंवाकल्प्यकाञ्चयपीम् १८५ तद्भूस्पर्शितौबाहू बाहूज्ञेयौविचक्षणैः तत्राबाधेचलम्बं चह्यानयेत्तत्फलंखलु १८६ तुल्यबाहुचतुष्कोणक्षेत्रेत्वेकभुजस्यच वर्गेवेदाहतेभेदादेककर्णकृतेःपदं १८७ अन्यत्कर्णोच्यते घातंयत्तयोरोजकर्णयोः तस्यार्द्धंतत्फ-

क्षेत्राणामाकारज्ञानार्थंत्रिभुजादीनांचिह्नानि. ६३

लंझेयं क्षेत्रेतुल्यचतुर्भुजे १८८ लम्बघ्नं भूमुखैक्यार्द्धं तुल्यलम्बेचतुर्भुजे यत्तत्फलोच्यतेतुल्यकर्णक्षेत्रेचतुर्भुजे. १८९ .वाहुकोटिवधंप्राग्वद्विज्ञेयंतत्फलंखलु वृत्तवाहुयुतक्षेत्रेवृत्ताकारांशकंफलं १९० पृथक्कृत्वाफलेन्योत्येयुक्त्वाक्षेत्रफलंभवेत् .

## अथक्षेत्राणामाकारज्ञानार्थंत्रिभुजादीनांचिह्नानि लिख्यंते

उदाहरणम् यत्र भूमिः शक्रमिता बाहू विश्व तिथिमितौ तत्रक्षेत्र फलंवद यत्र भूमिरिन्द्रमिता मुखं नवमितं बाहू सूर्य दिग्भ्यो न्मितौ तत्रक्षेत्र फलंवद यत्र तत्व तत्व- पंचाग्नि पंचाश्विमिताः भुजाः २५।२५।२५।२५ रवत्रिमितः वा शक्रमित स्त्वेक कर्णस्तत्र विषम कर्ण- समचतुर्भुज क्षेत्रफलंवद यत्रविस्तारंषाण्मितं दैर्घ्य मष्टोन्मितं तत्र समलम्ब समकर्ण दीर्घचतुरस्त्रे क्षेत्रफ- लंवद यंत्रभूः श्रुतिसमा मुखं शिवं बाहू नरवविश्वौ न त्रक्षेत्रफलंवद यत्रमुखंक्ष्मोन्मितंवामबाहुः रवाब्धि मितः दक्षिणबाहुरष्टार्गमितः भूमिः पंचाद्रिमिता त- त्र क्षेत्र फलंवद यत्र वाम बाहुर्नन्दाग्निमितः दक्षिण बाहु र्द्यस्र प्रमितःअन्यवाम भुजस्तत्वोन्मितः भूमिःष ष्टिमिता तत्र क्षेत्र फलंवद.

## अथक्षेत्र फलात्कोटि भुजानयनं

तुल्यकर्णा न्वतुर्बाहु क्षेत्रे क्षेत्र फलं भजेत् १९१ कल्पि- तेष्ट भुजे नैवकोटिः स्यात्कोटितो भुजम् अस्मोद्विघ्न

फलादेवंकोटिः स्यात्कोटितो भुजम्

## अथ घनफल क्षेत्रफल पृष्टफलानां रूपज्ञान मुच्यते.

सर्वतोवेधविस्तारदैर्घ्यैस्तुल्यं घनं भ वेत् तत्खंडगाः निंतुल्यानिजायन्ते बाह्यतः खलु १९३ तुल्यैश्चतुर्भुजैर्बद्धंतुल्यं कर्णाद्वयान्वितम् क्षेत्रंतज्ज्ञीयतेतद्वत्पृष्ट-क्षेत्रमुदीरितम् १९४.

## अथविषमगोल विषमवृत्तयोः समगोलसमवृत्त समव्यासकरणक्रम-मुच्यते.

अल्पवृत्तस्थले गोलमधिवृत्तस्थलेतथा मापयित्वा तुतद्योगम्मापितस्थानसंख्यया १९५ भक्त्वातत्प-रिधिर्ज्ञेय एवंविषमकुण्डले अल्पाधिव्याससंयोगम्मापितस्थानसंख्यया १९६ भक्त्वासंविस्तृतिर्ज्ञेया तद्वृत्तंकुण्डलोच्यते वाल्पाधिवृत्तसंयोगम्मापितस्थानसंख्यया १९७ उद्धृतंपरिधिर्ज्ञेयइत्यंसर्वत्र

पण्डितैः

## अथव्यासज्ञानं

एकप्रांत्यस्थलात्सूत्रमन्त्यप्रांत्यांशकंगतं १९८ वृत्ते सर्वाधिकंयत्स्यात्तद्व्यासंसमुदीरितम् .

## अथवृत्तव्यासयोरन्योन्यमानयनम्

प·धि· व्यासघ्नाग्निअष्टनागाभ्रतानास्तत्वांगवासरैः (४५०८८, १५६२५) १९९

भक्ताः स्तन्तोच्यते व्या· वृत्तघ्नातत्वांगवासरैः (परिधी, १५६२५) भक्त्वा नागो रगाभ्रांकवेदैर्व्यासोच्यतेखलु (४५०८८) २०० सामान्य परिधि व्या·

व्यासंभांकाग्निभिर्हत्वा वृत्तंखबाणार्कभिस्तथा (३९२३, १२५०) तावन्योन्यगुणाप्तोस्तस्सामान्येवृत्तविस्तृती २०१ स्थू·परि·

परिधिः

व्या· व्यासघ्नाः श्रुतयः शैलैर्भक्ताः स्यात्स्थूलमण्डलः (२२, ७)

स्थू·व्या· वृत्तंशैलैर्हतंस्थूलं श्रुत्यासंव्याससीरितम् (७, २२) २०२

उदाहरणं समोन्मितेव्यासेवृत्तंवद वृत्ताद्व्यासंचोच्यताम् व्यासः ७ परिधिमानंसूक्ष्मं

परिधिः ७ व्यासः

$२१ \frac{१५४९१}{१५६२५}$ सामान्यपरिधिः $२१ \frac{१२३९}{१२५०}$

स्थूल परिधिस्तु २२ परिधि $२१ \frac{१५४९१}{१५६२५}$ जातंव्यासं ७ सामान्यपरिधि $२१ \frac{१२३९}{१२५०}$ जातंव्यासं ७ परिधि

श्वे२२ ह्यासः ७ **अथवृत्तक्षेत्रेक्षेत्रफलानयनम्**

वृत्ताऽर्द्धव्यासखण्डघ्नं वृत्तक्षेत्रफलं भवेत् व्यासव-
र्गाहताः युग्मसप्तयुग्मदिवाकराः[१२२७२] तत्वषड्बाणैर्[१५६२५] भक्ताः
वृत्तक्षेत्रफलं भवेत् उदाहरणं सप्तव्यासोन्मितेवृ-
त्तक्षेत्रेफलंवद न्यासः व्यासः ७ परि-
धिः २१ $\frac{१५४९१}{१५६२५}$ क्षेत्रफलम्
३८ $\frac{७५७८}{१५६२५}$ **अथगोलेपृष्ठफलानयनम्**

व्यासं वृत्ताहतंयत्त द्गोलेपृष्ठफलं भवेत् २०४ नाग[४९०८८]
नागाभ्रता नघ्नंव्यासंविस्तारताडितम् पञ्चनेत्राङ्ग[१५६२५]
घस्राप्तंगोलेपृष्ठफलं भवेत् २०५ उदाहरणम् यद्गो-
लविस्तृतिः शैलातत्पृष्टाख्यं फलंवद न्यासः
व्यासः ७ परिधिः २१ $\frac{१५४९१}{१५६२५}$ गोलेपृष्टफलं १५३ $\frac{१४६९७}{१५६२५}$

**अथगोले घन फलानयनं**

स्वघ्नव्यासाहता द्धुत्तात्षट्[११६६६] षडंगशिवाहतात् गोष्ट-[४९०८८]
शून्यांकबाणासाद्गोले घनफलं भवेत् २०६ व्यासव-
र्गाहतंव्यासमष्टाष्टाभ्रांकसागरैः[४९०८८] हत्वाषट्तर्कषट्चं-[११६६६]

९२३२६५६२५
द्र्चंद्रै स्स्यादेव सम्भजेत् २०७ तत्वषट्पंचषड्नन्त
द्व्यंकै गोलि घनं भवेत् उदाहरणं यद्गोल व्यासं सप्ततुल्यं-
तद्गोलान्तर्गतं घनफलं वद न्यासः

गोल व्यासः ७ परिधिः २१ $\frac{१५४९१}{१५६२५}$

७

स्वघ्नव्यासः ४९ गोलस्यान्तर्गतं घनफलं जातम्-
२१२ $\frac{६९० ३१६० ४४}{९२३२६५६२५}$

## अथान्योक्तं घनफलानयनम्

गोले विस्तार वर्गघ्नं वृत्तं तर्कोद्धृतं भवेत् २०८ स्थूलं घन-
फलं खेतच्चाऽन्योक्तंचाऽपिलौकिकम् उदाहरणम्
व्यासः ७ परिधिः २१ $\frac{१५४९१}{१५६२५}$ व्यासवर्गः ४९ उक्त
वज्जातं घनफलं स्थूलं १७९ $\frac{२७९६७}{४६८७५}$ .

## अथ वृत्तक्षेत्रस्य क्षेत्र फलोपपत्तिक्रमोविरच्यते.

वृत्तव्यासमभिन्नेन तद्व्यासेनैव सम्भजेत् २०९ ल-
ब्धेनैकादिकं पूर्णविस्तारान्तं पृथक् पृथक् हत्वाविस्तृ-
तयोर्ज्ञेयास्तेषां कृत्वाच कुण्डलान् (परिधीन्) २१० एकविस्तार
जं वृत्त (अर्द्ध) खण्ड मेकफलं मतम् द्वितीय व्यासजं वृत्तमेकै-

व्यासज कुण्डले २११ युक्त्वायुग्मो[२]द्धृतंलब्धंतद्द्विती[२]यं फलंमतं [२]तृतीयव्यासजंवृत्तंद्वितीयव्यासजेतथा २१२ वृत्ते युक्त्वा च तत्खण्डं तृतीयं फलमुच्यते चतुर्थव्यासजंवृत्तं तृतीयव्यासजेतथा २१३ वृत्तेयुक्त्वा तदर्द्धंच तच्चतुर्थफलंमतं एवंस्वस्वसमीपादिजंयुक्त्वाऽर्द्धफलं भवेत् २१४ प्राग्व्यासघ्नं फलैक्याऽर्द्धं वृत्तक्षेत्रफलं भवेत् वृत्तक्षेत्रफलं यत्तद्वृत्ते पृष्ठफलम्मतं २१५ यथाव्यासः [$\frac{१५}{२}$] ७ $\frac{१}{२}$ अभिन्नेन ७ भक्तः लब्धं [$\frac{१५}{१४}$] १ $\frac{१}{१४}$ अनेनैकं १ हृत्वा प्रथमव्यासः [$\frac{१५}{१४}$] १ $\frac{१}{१४}$ तेनैवयु[२]ग्मंहृत्वाद्वितीय व्यासः [$\frac{१५}{७}$] २ $\frac{१}{७}$ एवंतृतीयव्यासः [$\frac{४५}{१४}$] ३ $\frac{३}{१४}$ चतुर्थं [$\frac{३०}{७}$] ४ $\frac{२}{७}$ पंचम [$\frac{१५}{१४}$] ५ $\frac{५}{१४}$ षष्ठ [$\frac{४५}{७}$] ६ $\frac{३}{७}$ सप्तम [$\frac{१५}{२}$] ७ $\frac{१}{२}$

वा [$\frac{१०५}{१४}$] प्रथमव्यास १ $\frac{१}{१४}$ स्यपरिधिः $\frac{७३६३२}{२१८७५}$ प्रथमफलं $\frac{३६८१६}{२१८७५}$ द्वितीयव्यास २ $\frac{१}{७}$ स्यपरिधिः $\frac{१४७२६४}{२१८७५}$ द्वितीयफलं $\frac{११०४४८}{२१८७५}$ तृतीयव्यास ३ $\frac{३}{१४}$ स्यपरिधिः $\frac{२२०८९६}{२१८७५}$ तृतीयफलं $\frac{३६८१६}{४३७५}$ वाफलं $\frac{१८४०८०}{२१८७५}$ चतुर्थव्यास ४ $\frac{२}{७}$ स्यपरिधिः $\frac{२९४५२८}{२१८७५}$

चतुर्थफलं $\frac{२५७७१२}{२१८७५}$ पंचमव्यास ५ $\frac{५}{१४}$ स्यपरिधिः $\frac{७३६३३}{४३७५}$ वा पंचमपरिधिः $\frac{३६८१६०}{२१८७५}$ पंचमफलं $\frac{३३१३४४}{२१८७५}$ षष्ठव्यास ६ $\frac{३}{७}$ स्यपरिधिः $\frac{४४१७३२}{२१८७५}$ षष्ठफलम् $\frac{४०४९७६}{२१८७५}$ सप्तमव्यास ७ $\frac{१}{२}$ स्यपरिधिः $\frac{७३६३२}{३१२५}$ वासप्तमपरिधिः $\frac{५१५४२४}{२१८७५}$ सप्तमफलम् $\frac{४७८६०८}{२१८७५}$ सर्वफलैक्या $\frac{१८०३९८४}{२१८७५}$ $\frac{९०१९९२}{२१८७५}$ (शेषफ. ४४) ($\frac{५४८८}{३०६२५}$) आदिव्यास १ $\frac{१}{१६}$ ग्रंजातं वृत्तक्षेत्रफलम् $\frac{१३५२९८८}{३०६२५}$

एतस्मिंस्त्वन्तिमव्यासं वृत्तव्याससमं भवेत् वृत्तोत्थाविस्तृतिर्भिन्नायत्र तत्र विचक्षणैः २१६ भिन्न भागान्वितस्यैव नान्त्यं कोष्ठं तु कल्पयेत्

## अथगोलस्यपृष्ठफल घनफलयोरुपपत्तेरानयनक्रमउच्यते

वृत्तस्यांऽध्रिलवं (४) चापसंख्यावृत्तदले भवेत् २१७ अभिन्नेष्वास (चाप) संख्याभिश्चाप (इष्वासश्चापः) संख्याविभाजिता अभिन्नेष्वास (चापः) पर्य्यन्तं लब्धमेकादिभिर्हतम् २१८ कृत्वापृथक् पृथक् चापाः स्युस्तेषांमौर्विकाफलान् (ज्या) आनयेत्

जसांनि ध्येतत्फलं प्राक्फलान्वितम् २१९ कृत्वार्द्धं
विस्तृतिर्ज्ञेया सर्वे विस्तृतयोर्बुधैः [४९०८८] नागाष्टाभ्रांकवेद
घ्नास्तत्वषड् [१५६२५] दिन भाजिताः २२० स्युर्वृत्तास्ते पृथङ्गि-
घ्ना विस्तारैः सागरो [४] द्धृताः लब्धयोगंतु तद्गोल [गोलार्द्ध] खण्डे
घनफलोच्यते २२१ वृत्तानांसंयुतिर्गोलखण्डे पृष्ट
फलोच्यते अर्द्धंयुग्माहतं [२] कृत्वा पूर्णगोलफलं भवेत्
२२२ यथावृत्तं ३६० वृत्तार्द्धं १८० चापसंख्या ९०
अभिन्नधनुस्संख्या ९० भिन्नचापसंख्या ९० विभा-
जितालब्धम् १ अनेनैकादिकमभिन्नधनुः पर्य्यन्तं
हत्वाचापाः स्वांकसमाः ९० जाताः १।२।३।४
।५।६।७।८।९।१०।११।१२।१३।१४।१५।१६
।१७।१८।१९।२०।२१।२२।२३।२४।२५।२६।
२७।२८।२९।३०।३१।३२।३३।३४।३५।३६।३७
।३८।३९।४०।४१।४२।४३।४४।४५।४६।४७
।४८।४९।५०।५१।५२।५३।५४।५५।५६।५७
।५८।५९।६०।६१।६२।६३।६४।६५।६६।६७

६८।६९।७०।७१।७२।७३।७४।७५।७६।७७।७८।७९।८०।८१।८२।८३।८४।८५।८६।८७।८८।८९।९०। एवंक्रमादेषां जीवाफलानिचयात्र प्रथमस्यज्या भागमुखा १।५९।५९ द्वितीयस्य ३।५९।५७ तृतीयस्य ५।५९।५० चतुर्थस्य ७।५९।३६ पंचमस्य ९।५९।१३। एवंसर्वेषांक्रियया प्रथमकोष्ठात्पूर्वं शून्यकोष्टं तत्फलंच शून्यं० प्रथमकोष्टफलशून्यकोष्ट फलयोरैक्या १।५९।५९ र्द्धं प्रथमकोष्टव्यासं जातंभागमुखं ०।५९।५९।३० द्वितीयकोष्ट ३।५९।५७ प्रथमकोष्ट १।५९।५९ फलयोगा ५।५९।५६ र्द्धं द्वितीयस्यव्यासं २।५९।५८ द्वितीय तृतीय योगार्द्धं तृतीयव्यासं ४।५९।५३।३० एवंचतुर्थव्यासं ६।५९।४३ पंचमव्यासं ८।५९।२४।३० एवंसर्वेव्यासाः भवन्ति परिधीनांयोगंपृष्ठफलं क्षेत्रफलानांयोगं घनफलंगोलार्द्धे भवति तद्द्विघ्नंपूर्णफलं भवति एवंपंचकोट्यादि ५०००००० वृत्तगोलजेनघनफलेन

तथापृष्ठफलेनानुपाताद्गोलस्य घनफलं पृष्ठफलंचा-
नयेदिति. **अथस्थूलजीवाद्यानयनमुच्यते**
वृत्तंचापोननिघ्नंतु ह्यत्राद्याह्वयमीरितम् वृत्तवर्गा-
द्विनाअक्षाँ वेदासाँत्राद्यवर्जिताः २२३ वेदासास्त-
त्फलेनासमाद्यविस्तारयोर्वधं स्थूलज्याजायते.
*जीवाव्यासयोगान्तराहतेः २२४ मूलोनव्यासख-
ण्डंतु सूक्ष्मज्याव्यासजंस्फुटं [शर] बाणंस्यात्सूक्ष्मबा
[सूक्ष्म] णोनाद्व्यासात्सूक्ष्मशराहतात् २२५ मूलंद्वि[२]घ्नंस्फु-
[सूक्ष्म] टज्यास्यात्सूक्ष्मज्याऽर्द्ध[वर्ग]कृतिं भजेत् सूक्ष्मेषु[शरेण]णाफ-
लंसूक्ष्मबाणार्द्धव्यासमुच्यते २२६ तुर्य्यांशंवृत्त
वर्गस्य पंचघ्नं जीवयाहतं वेदघ्नव्याससंयुक्तजीव-
यासंफलंभवेत् २२७ तत्फलंवृत्तवर्गस्यपादांशेपरि

---

*जीवाबाहुः व्यासः कर्णः अनयोर्वर्गान्तरं कोटिज्यावर्गः तज्ज्या-
व्यासयोर्योगान्तर घातसमः तन्मूलं सूक्ष्म कोटिज्यास्यात् सूक्ष्म
ज्याव्यासयोः योगान्तराहतेः मूलं सूक्ष्म कोटिज्यास्या भुजज्यौरत्या
एवं कोटिज्योत्था सूक्ष्म भुजज्यास्यात् सूक्ष्म कोटिज्यांवा भुज-
ज्यांव्यासेहित्वातत्खण्डं सूक्ष्मशरःस्यात्

वर्जयेत् शेषमूलोनितं वृत्तखण्डं चापमुदीरितं (धनुः) २२८
स्थूलं चेन्मौर्विका (ज्या) च्चापं (धनुः) सूक्ष्मं सूक्ष्मज्यकायदि अत्रै-
तत्कार्मुकं (चापं) स्थूलं विज्ञेयं गणकोत्तमैः २२९ वृत्तं तत्र
स्वपूर्वाणां तुल्यानां कोणसंख्यया भक्तस्तत्परिधिश्चा-
पं ज्ञेयं तच्चापमौर्विकाम् २३० दैर्घ्यमुक्तं तयैकैकको-
णस्यैवहितत्तया एकैकस्य भुजस्यैव परिमाणं निगद्यते
२३१ यथा व्यासः ७ वृत्तं स्थूलं २२ धनुः ३ आद्यः
५७ वृत्तस्य २२ वर्गः ४८४ पंचाहतः २४२० वेदाप्तः
६०५ आद्यहीनः ५४८ वेदाप्तः (४) फलं १३७ आद्य ५७
विस्तार ७ योर्वधं ३९९ फलेन १३७ भक्तं लब्धं स्थूल
ज्या २ $\frac{१२५}{१३७}$ अथयथा व्यासः १० जीवा ६ योगः १६
अन्तरं ४ घातः ६४ मूलं ८ व्यासे १० हित्वार्द्धे १ शरः
१ व्यस्ताज्जीवा ६ व्यासश्च १० अथयथा व्यासः १४
जीवा ४ परिधिः ४४ वर्गः १९३६ वेदांशः ४८४ पंच-
घ्नः २४२० जीवया ४ हतः ९६८० वेदघ्नव्यासः ५६
जीवा ४ युक्तं ६० अनेन तद्भक्तं फलं $\frac{४८४}{३}$ वृत्त २२

वर्ग१९३६ पादे $\frac{४८४}{१}$ हीनान्मूलं वृत्तार्द्धे हित्वा स्थूलं धनुः वा ४ न्यासः

न्यासः शर १ ज्या ६ न्यासः १०

न्यासः त्रिबाहुः कोणाः

न्यासः चतुर्बाहुः कोणाः

न्यासः पंचबाहुः कोणाः

## अथसूचनम्

सूक्ष्मंजीवादिकंमर्म्मचसूक्ष्मवर्गपदंतथा सूक्ष्मंधन पदंचाग्रेज्योत्पत्तौकथयाम्यहम् २३२ उद्देशकसमं शशीनांचक्रवृत्तेतुकोणाः ३६० खांगगुणाः स्मृताः तास्मि- ०।७।० जीवांशाः १।०।० न्नर्द्धांशबाहुज्यात्वेककोणज्यकाभवेत् २३३ तत्राऽ र्थज्याकलाषष्टि ६० तुल्या ज्ञेया विचक्षणैः

## अथ बंधमुखधनहस्ताकारस्यभाण्डस्यक्षेत्रफलानयनम्

वेधविस्तारयोगघ्नद्विघ्नदैर्घ्येणसंयुतम् २३४ वेधः विस्तारयोर्द्विघ्नघातंकृत्वाविचक्षणैः तद्घनाकार-

भाण्डस्यज्ञेयंक्षेत्रफलंखलु २३५ अत्पावं विस्तारे २ दैर्घ्ये २४ वेधे ३ तस्य क्षेत्रफलं ५२ भवति अथवाक्षेत्रफलानामैक्यात्षड्गुणकान्मूलं विस्तारादीनां बन्धमुखकस्यसममानंस्यात् अथवा अबन्धमुखानां क्षेत्रफलैक्यान्तर्कातास्त्वयष्टांशाद्दीनान्मूलं वृहदेक भाण्डस्य बन्धमुखकस्य सममानंस्यात् बंधमुखानांक्षेत्रफलैक्यंनर्कासंस्वांशांशाश्चितान्मूलंवृहदेकभाण्डस्याबन्धमुखकस्य सममानंस्यात्. इतिक्षेत्रव्यवहारः

## अथ खातव्यवहारः

अथ वेधादिपरिज्ञानं विधीयते नीचत्वमुच्चतापिण्डं गम्भीरं वेधमुच्यते सर्वत्र विषमक्षेत्रे स्वस्वजातिस्थलेषुच २३६ मापयेन्मापितैक्यन्तु मापितस्थानसंख्यया भक्त्वायथोचितं तुल्यंतल्लब्धंजायतेखलु २३७ दैर्घ्यविस्तारवेधानां घातं घनफलम्भवेत् क्षेत्राभिधंफलंवेधाभिघ्नं घनफलम्भवेत् २३८

## अथखाते घनफलानयनम्

वेधक्षेत्रवधं तुल्यखाते घन फलं भवेत् उदाहरणं यस्यखातस्य त्रिषुस्थानेषु दशैः शिवैः सूर्यैस्तुल्याः दैर्घ्याः १०।११।१२ पंचैस्तर्कैं रगैस्तुल्याः विस्ताराः ५।६।७ युग्माभ्यांत्रिभिर्वेदैरुन्मिताः वेधाः२।३।४ स्युस्तस्य घन फलम्वद न्यासः

७ १२ विषम ६ खातः ५
४ ११ ३ २
खातदर्शनं १०

११
६ तदेवसम खातः ६
वेधः ३
११

उक्तवत्करणात्समखाते दैर्घ्यं ११ विस्तारं ६ वेधः ३ एषांघातं घनफलम्१९८

## अथ वाटिकादि खातस्य घनफलानयनं

तलजंमुखजार्द्धंच क्षेत्रंवेधाभिमर्द्दितम् २३९ रू त्वानयोस्तु संयोगं फलंस्याद्वाटिकाघनम् तुल्यखात फलत्र्यंशः सूचीखातेफलम्मतम् २४० उदाहरणं यस्याः वाप्याः सुखेदैर्घ्यं हस्तैः सूर्योन्मितं तथावि-स्तारेदश हस्तोन्मितं तलेदैर्घ्यंतर्कोन्मितं विस्तारंपं-चहस्तोन्मितं वेधंसस हस्तोन्मितंतस्याः घनफलंवद

न्यासः

| | | |
|---|---|---|
| दै २ क्षेत्र $\frac{15}{2}$ वि $\frac{5}{2}$ क्षेत्र $\frac{15}{2}$ घन $\frac{105}{2}$ | दै १२ दै ६ क्षेत्र १५ घनं $\frac{105}{2}$ दै ६ | दै ३ क्षे $\frac{15}{2}$ वि $\frac{5}{2}$ घन $\frac{105}{2}$ क्षेत्र $\frac{15}{2}$ |
| क्षेत्र १५ १० घनं $\frac{105}{2}$ | वि ५ क्षेत्र ३० पूर्ण घन वेधः ७ घनं २१० | वि ५ क्षेत्र १५ घनं $\frac{105}{2}$ ५ |
| २ क्षेत्र $\frac{15}{2}$ $\frac{5}{2}$ क्षेत्र $\frac{15}{2}$ घ $\frac{105}{2}$ | दै ६ क्षेत्र १५ घनफ $\frac{105}{2}$ दै १२ | २ क्षेत्र $\frac{15}{2}$ $\frac{5}{2}$ क्षेत्र $\frac{15}{2}$ घन $\frac{105}{2}$ |

सर्वघनफलैक्यम् ६३०

मुखे दैर्घ्यं १२ विस्तारं १० तले दैर्घ्यं ६ विस्तारं ५ वेधः ७ तलजं क्षेत्रफलं ३० मुखजं क्षेत्रफलार्द्धं ६० तौ क्षेत्रफलौ वेधघ्नौ जातौ २१०।४२० अनयोर्योगम् ६३० घनहस्तफलं ६३० उदाहरणं यस्य समखातस्य दैर्घ्यं हस्तद्वयं तथा विस्तारं हस्तद्वयं वेधं तर्कहस्तोन्मितं तस्य घनफलं वद तत्तुल्यस्य सूचीखातस्य घनफलं वद तथा यस्य वृत्तखातस्य व्यासं सप्तसोन्मितं वेधं वेदोन्मितं तस्य घनफलं वद तथा वृत्तखातस्य सूची खातफलं वद न्यासः

| २ वेधं २ ६ |
|---|

दैर्घ्य २ वि-

स्तारं २ वेधः घनफलं २४ घनहस्ताः २४ सूचीखात फलार्थं न्यासः दैर्घ्यं २ विस्तारं २ वेधः ६ घनफलं ८ अथ वृत्तखातफलार्थं न्यासः व्यासः ७ वेधः ४ परिधिः २१ $\frac{१५४९१}{१५६२५}$ क्षेत्रफलं ३८ $\frac{७५७८}{१५६२५}$ घनफलं १५३ $\frac{१४६८७}{१५६२५}$ अथवृत्त सूचीखात फलार्थं न्यासः

२ २
सूचीखातः
वेधः ६

७
खातव्यासः
वेधः ४

व्यासः ७ परिधिः २१ $\frac{१५४९१}{१५६२५}$ वेधः ४ घनफलं ५१ $\frac{१४६८७}{४६८७५}$

वृत्तसूचीखातः
७
खातव्यास
वेधः ४

इतिखातव्यवहारः

## अथचितिव्यवहारः अथभित्तेर्घनफलानयनम्

हत्वाक्षेत्रफलंभित्तेरुच्छ्रयेणघनंभवेत्
भित्तिश्चेदिष्टिकानांतु हीष्टिकाघन भाजितं २४१
भित्तेर्घनफलंभित्तेरिष्टिकानाम्मितिर्भवेत् स्युस्तरा
उच्छ्रयंभित्तेरिष्टिकोच्छ्रयभाजितम् २५२ एवमश्म
चिते रश्मान् विज्ञेयंपाण्डितोत्तमैः उदाहरणं यस्या-

इष्टिकायाः दैर्घ्यंपादोनैकहस्तोन्मितम् विस्तारमर्द्धहस्तोन्मितं वेधं हस्ताष्टमांशं चेदिष्टिकाघनं वद यस्यां भित्तौ दैर्घ्यं वेदमितहस्तौ विस्तारं त्रिकरोन्मितं वेधं युग्मोन्मितं तत्र चितिघनं चिता विष्टिका संख्यां च वद इष्टिकान्यासः [ ] दैर्घ्यं $\frac{3}{4}$ विस्तारं $\frac{1}{2}$ वेधः $\frac{1}{8}$ इष्टिकाघनं $\frac{3}{64}$ चितिन्यासः दैर्घ्यं ४ विस्तारं ३ वेधः २ भित्ते र्घनफलम् २४ इदमिष्टिकाघनेन $\frac{3}{64}$ भक्तं चिता विष्टिकामितिः ५१२ चितौ तराश्च १६ एवं पाषाणाच-येपि इति चितिव्यवहारः समाप्तः

## अथ क्रकच व्यवहारः

दैर्घ्यं वेधाहतं दारोरेकाद्यैर्दारणस्थलैः २४३ हत्वा क्षेत्रफलं सर्वपट्टानां जायते खलु उदाहरणम् यद्दारोरेकपट्टस्य पिण्डं मूले हस्तोन्मितमग्रे भूपांगुलोन्मितं दैर्घ्ये त्वेकत्रांगहस्तोन्मितमन्यत्राब्धिकरोन्मितं तं स्थाने चतुष्के सुदार्यते चेत्तत्पट्टानां क्षेत्रफलै क्यं वद न्यासः

दैर्घ्यं ६ दैर्घ्यं ४ पिण्डे $\frac{१}{१}$ $\frac{२}{३}$ दारणस्थानसंख्या ४ अत्र दैर्घ्ययोर्योगं १० द्विभक्तं दैर्घ्यः ५ पिण्डयोगं $\frac{५}{३}$ द्विभक्तं पिण्डः $\frac{५}{६}$ दैर्घ्यपिण्डाहतिः $\frac{२५}{६}$ एकाढ्यदारणस्थलै ५ र्गुणिताः $\frac{१२५}{६}$ तत्पट्टानां क्षेत्रफलयोगं जातं $\frac{१२५}{६}$ हरभक्तं २० $\frac{५}{६}$.

## अथक्रकचान्तरक्रमम्

वेधविस्तारयोर्घातमेकाढ्यैर्दारणस्थलैः २४४ हत्वातिर्य्यक्तयादारुर्दार्य्यतेचेत्फलं भवेत् उदाहरणं यस्यैकपट्टस्य दारो विस्तारं सार्द्धहस्तोन्मितं पिण्डहस्तद्वयं तत्स्थानत्रयेषु तिर्य्यक्तया विस्ताररूपेण दार्य्यते चेत्तत्पट्टानां क्षेत्रफलं सर्व्ववद्

न्यासः $\frac{३}{२}$ $\frac{२}{१}$ दारणसंख्या

पट्टः

३ सैका ४ पिण्डः २ विस्तारः ३/२ वधं ३ सैक दारण घ्नं १२ क्षेत्रफलैक्यम् १२

अथान्योन्यफलानयनविधिरुच्यते

नीचोच्चकुलयोर्मध्येय द्गुणस्तद्घनाहतम् २४५ उत्तमस्य घनंतत्तु नीचजातिघनंभवेत् नीचोच्चवंशयोर्मध्ये यद्गुणंतद्घनोद्धृतम् २४६ नीचजातिघनंलब्धमुच्चजातिघनोच्यते यद्गुणंवंशयोर्मध्ये तद्वर्गेणसमाहतम् २४७ उच्चक्षेत्रफलंतत्रनीचक्षेत्रफलोच्यते यद्गुणं कुलयोर्मध्येतत्कृत्यापरिभाजितम् २४८ नीचक्षेत्रफलं लब्धमुच्चक्षेत्रफलोच्यते उच्चजातिघनान्नैव नीचक्षेत्रफलं भवेत् २४९ नीचक्षेत्रफलाच्चापितूत्तमस्य घनंनहि उच्चक्षेत्रफलात्तद्वन्नीचजातिघनंनहि २५० नीचवंशघनाच्चापितूच्चक्षेत्रफलंनहि.

अथकाष्ठविदारणकर्मणिभाटकफले क्षेत्रफलज्ञानमुच्यते.

वेधदैर्घ्याहतिर्दारोरभ्यस्त दारणस्थलैः २५१ दारणी-

यफलंज्ञेयंतद्विदारणाकर्म्मणि वेधविस्तारयोर्घात
सभ्यस्तंदारणास्थलैः २५२ तिर्य्यक्तयातु तद्दारोदार
णेतत्फलं भवेत् उदाहरणं यस्यैकपट्टस्य दारो दैर्घ्यपं-
चहस्तोन्मितं पिण्डं हस्तद्वयं तत्स्थानत्रयेषु दैर्घ्यरू-
पेणदार्य्यते चेत्तत्काटकायसैत्रफलैक्यंवदन्यासः दै-
र्घ्यः ५ वेधः २वर्धः १० दारणास्थानैः ३ हत्वाजातंदा-
रणीयफलं३० उदाहरणं यस्यैकपट्टस्यदारोःपि-
ण्डंहस्तद्वयोन्मितं हस्तोन्मितंतुविस्तारं तात्तिर्य्यक्त
याचतुर्षुस्थानेषुदार्य्यते चेत्तद्दारणीयफलंवद न्या-
सः पिण्डः२ विस्तारः१ वर्धः२ दारणास्थानैः४ हत्वा-
जातं दारणीयफलं८ इतिक्रकचव्यवहारः
### अथ राशिव्यवहारः
समध्येधान्यादि राशीनांयत्सूत्रंसमग्रवृत्तयोः २५३ त-
द्गणितवृत्तजंव्यासखण्डवर्गोनितात्पदम् वेधः स्याद्वृ
त्तषष्ठांशवर्गघ्नेधवधंबुधैः २५४ स्थूलं घनफलं ज्ञे-
यंवाव्यक्तव्यासयोर्वधं वेधघ्नं भास्करासंस्यात्सूक्ष्मं

राशिंघनंफलम् २५५ उदाहरणम् यस्य धान्यादिरा-
शेर्वृत्तं द्वादशहस्तोन्मितं वेधंसव्यंशैक हस्तोन्मितं
तस्य घन फलंवद् न्यासः राशिः परिधिः १२
वेधः $\frac{४}{३}$ स्थूलं घनफलं $\frac{१६}{३}$ परिधिः १२ व्यासः व्या-
सः ३ $\frac{४६८७५}{१२२७२}$ $\frac{१००५९}{१२२७२}$ सूक्ष्मं घनफलं ५ $\frac{८५५}{९२०४}$ घनफलं $\frac{४६८७५}{९२०४}$

अथपादोनार्द्धपादराशीनां फलानयनमुच्यते

सत्रिभागैकयुग्माब्धिनिघ्नात्तुपरिधेः फलम् स्यात्पादोना
र्द्धप्रादांशराशेःस्वगुणभाजितम् २५६ उदाहरणं यद्रा
शिवृत्तंद्वादशहस्तसमंतद्वांशेः पादोनार्द्ध पादांश घनफ-
लान्वद् न्यासः पादोनं ९ पादोनवृत्तं९ तद्गुणकः
$\frac{४}{३}$ गुणघ्नंपादोन वृत्तंपूर्णपरिधिः १२
तस्मात्प्राग्वज्ज्ञातं घनफलं ५ $\frac{८५५}{९२०४}$ गुणं
$\frac{४}{३}$ भक्तंजातं घनफलम् ३ $\frac{१००५९}{१२२७२}$ अथार्द्धराशेः
न्यासः अर्द्धराशिः ६ गुणः २ पूर्णपरिधिः १२ तद्घन
फलं ५ $\frac{८५५}{९२०४}$ गुणः २ भक्तं जातंघन फलं २ $\frac{३३५३}{६१३६}$
अथपादराशेः न्यासः पादं ३ गुणः ४ पूर्णपरिधिः

१२ तद्घनफलं ५ $\frac{८५५}{१२०४}$ गुणः ४ भक्तं जातं पादराशे
र्घनफलं १ $\frac{३३५३}{१२२७२}$ **अथराशिफलोपपत्तिरुच्यते**
भक्त्वावेधमभिन्नेनतेनवेधेनयत्फलम् तेनचैकादिभि
न्नेनव्यासंहत्वासमुद्धरेत् २५७ पूर्णवेधेन विस्ताराःसु
वेधान्तमितिक्रमात् विस्तारमन्तिमंचात्रपूर्णव्यास
समंभवेत् २५८ भिन्नांशयुक्तवेधस्यनान्तिमंकोष्टमा-
चरेत् शून्यवेधस्यविस्तारवृत्तौशून्यौस्मृतौबुधैः२५९
शून्यप्रथमयोर्व्यासयोगंयुग्मोद्धृतंफलम् तज्ज्ञेयंप्रथमं
चाथविस्तारंप्रथमस्यच २६० द्वितीयव्याससंयुक्तं कृ
त्वार्द्धस्याद्वितीयकम् द्वितीयव्याससंयुक्तांतृतीयविस्तृ-
तिंतथा २६१ कृत्वार्द्धंतत्तृतीयाख्यंविज्ञेयंगणकोत्त-
मैः तृतीयविस्तृतिंयुक्त्वा चतुर्थविस्तृतौबुधैः २६२
कृत्वाखण्डंचतुर्थाख्यंस्यात्फलंचैवमेवहि तत्पूर्वव्या-
सखंडंतुफलमाद्याह्वयंमतम् २६३ द्विघ्नमाद्यंध्रुवं
ज्ञेयमाद्यंतद्ध्रुवकान्वितं द्वितीयाख्यंफलंज्ञेयंताद्द्विती-
यंध्रुवान्वितं २६४ तृतीयाख्यफलंज्ञेयं तृतीयंचध्रुवा

वान्वितं न्चतुर्थारव्यंफलंज्ञेयमेवंसर्वेथवाफलाः २६५ अष्टाष्टाभ्रांकसिंधुभ्रास्तेतेस्वस्वफलाभिधाः तत्वषड्वा सरै र्भक्ता जायन्ते कुण्डलाःखलु २६६ कुण्डलव्यासयो र्घातंवेदाप्तं क्षेत्रमीरितम् क्षेत्राणांसंयुतिंकृत्वास्याच्चद्राशि घनंफलम् २६७ कुण्डलानांयुतिश्चात्रराशेः पृष्ठफलंभ- वेत् वेधवृत्तवधार्द्धंवाराशेः पृष्ठफलंभवेत् २६८ यथारा शिपरिधिः ३६ व्यासः $\frac{५६२५००}{४९०८८}$ वेधः ४ अभिन्नवेधेन ४ भक्तः फलं १ एवमुक्त वद्वेध ४ पर्य्यन्तव्यासाः प्रथम व्यासः $\frac{१४०६२५}{४९०८८}$ द्वि० व्या० $\frac{२८१२५०}{४९०८८}$ तृ० व्या० $\frac{४२१८७५}{४९०८८}$ चतुर्थव्यासः $\frac{५६२५००}{४९०८८}$ स्पष्टव्यासा एवफलानि अग्रो पयोग्यानि प्रथमफलम् व्यासः $\frac{१४०६२५}{९८१७६}$ द्वि० फ० व्यासः $\frac{४२१८७५}{९८१७६}$ तृती० फ० व्यासः $\frac{७०३१२५}{९८१७६}$ चतुर्थफलम् व्यासः $\frac{९८४३७५}{९८१७६}$ अथ- कुण्डलानि प्र० परिधिः $\frac{६९०३}{१५३४}$ द्वि० परिधिः $\frac{२०७०९}{१५३४}$ तृती० परिधिः $\frac{३४५१५}{१५३४}$ चतुर्थ० परिधिः $\frac{४८३२१}{१५३४}$ अथक्षेत्रफलानि प्रथमः क्षेत्रफ० $\frac{९७००७३४३७५}{६०२४०७९३६}$ द्वि० क्षेत्रफ० $\frac{८७३६६०९३७५}{६०२४०७९३६}$ तृती० क्षेत्रफ० $\frac{२४२६८३५९३७५}{६०२४०७९३६}$ चतुर्थ० क्षे० फ० $\frac{४७५६५९८४३७५}{६०२४०७९३६}$ क्षेत्रफलैक्यंराशेर्घनफलम्

| ८१५४१६८७५०० |
| --- |
| ६०२४०७९३६ |

हरभक्तं जातं धनफलं १३५ ५४१५४०३५/१५०६०१९८४

१३५ ५४१५४०३५/१५०६०१९८४ अथवा व्यासवृत्ताहतिः व्या॰ ५६२५००/४९०८८ वृत्तं ३६ घातः २०२५००००/४९०८८

अस्यास्त्र्यंशः राशेर्घनफलं वा १३७ १५५९/३०६८ राशेः पृष्ठ-

फलं ७२॥ इष्टाऽकस्याऽधमंकुलं कृत्वा तस्य फलात्फलं

दृष्टाऽकस्यानयित्वा तु तत्सूक्ष्मं जायते फलं २६९

## अथ राशेः स्थूलफलोपपत्तिः

वृत्तरामांशकं यत्त द्विस्तारं स्थूलमुच्यते तेन घ्न वृत्त पादांश

स्थूल क्षेत्र फलं भवेत् २७० क्षेत्रं वेधाहतं कृत्वा वृत्तखात

समं फलम् विज्ञेयं तद्गुणैर्भक्तं स्थूलं राशिफलं भवेत् २७१

यथा राशिपरिधिः ३६ स्थूलव्यासं १२ वृत्तपादं ९ वेधः ४

वृत्तपादाहतं व्यासं वृत्तक्षेत्रफलं १०८ वेधाहतं वृत्तखा-

तसमं घनफलं स्थूलं ४३२ तत्र्यंशं वृत्तखातस्य सूचीखा-

तसमं राशेः स्थूलं घनफलम् १४४ इति राशिव्यवहारः समा॰

## अथ च्छायाव्यवहारः

छाययोः कर्णयोश्चाऽपि भेदयोर्वर्गयोस्तयोः भेदाप्तं द्विघ्नं

शंकोस्तु वर्गलब्धिस्तदुच्यते २७२ सैकलब्धेः पदेन घ्नं

कर्णयोरन्तरंद्विधा छाययोरन्तरेणोनयुक्तमर्द्धं प्रभेस्मृ-
ते २७३ छाययोर्योगवर्गेतुकर्णयोरन्तरस्यचं वर्गस्यैवा-
न्तरंकृत्वातेनाप्तंद्विघ्नशंकुजं २७४ वर्गितस्तैकलब्धस्य
मूलंकर्णान्तराहतम् द्विस्थंभैक्येन विश्लेषयोगमर्द्धं
प्रभेस्मृते २७५ कर्णयोश्छाययोश्चैवयोगवर्गान्तरोद्धृ-
तम् चद्वर्गाद्विघ्नशंकोस्तुलब्धस्यैकान्तरात्पदं २७६ कर्ण
योगाद्धतंद्विस्थं भैक्येनाऽयोगसंयुतिम् कृत्वाखण्डे
प्रभेस्यातां छाययोऽरन्तरस्यच २७७ वर्गेकर्णैक्यवर्गस्य
भेदंकृत्वाहरोभवेत् द्विघ्नशंकुकृतिंभक्त्वा छेदेनफल
रूपयोः २७८ भेदमूलाहतंकर्णयोगंद्विस्थापितंतया
भाभेदेनान्तरद्युतिंकृत्वाच्याऽर्द्धेप्रभेस्मृते २७९ उदा-
हरणम् एकदीपप्रकाशेषोडशाषोडशा भागांकितयोः
कीलयोश्छाययोरन्तरमष्टेन्दुप्रमितं कर्णयोरन्तरंश-
क्रप्रमितंचेत् छायेवद अथवा भैक्यद्व्यब्धिमितंकर्णा
न्तरंशक्रोन्मितं चेत् छायेवद अथवा भायोगंद्व्यब्धिमि-
तं कर्णयोगंवेदाक्षसमंचेत् छायेवद अथवा छायान्तरं

नागेन्दुमितं कर्णयोगं वेदाक्षि (५४) प्रमितं चेत् छायेवद न्यासः

शंकुः १६ शंकुः १६ भान्तरं १८ कर्णान्तरं १४ अनयो-
र्वर्गान्तरेण १२८ संद्विघ्नशंको ३२ वर्ग १०२४ लब्धं ८ सै-
कं ९ मूलं ३ घ्नकर्णान्तरे ४२ भान्तरं १८ युक्तोनार्द्धे जाते
छाये ३०।१२ कर्णौ ३४।२० अथवा शंकू १२।१२ भांत
रं ४ कर्णान्तरं २ छाये ५।९ कर्णौ १३।१५ कर्णयोगः
२८ वर्गः ७८४ छायायोग १४ वर्गः १९६ द्विघ्न शंकु २४
वर्गः ५७६ छायान्तर ४ वर्गः १६ कर्णान्तर २ वर्गः ४

## अथ छायान्तरक्रमः

नाविद्युक् दीपकौच्च्यासं शंकु दीपतलान्तरम् शंकुघ्नं शं-
कुभाज्ञेया दीपशंकुतलान्तरम् २८० शंकुघ्नं भा (छा) हृतं

शंकुयुक्तंदीपौच्च्यमुच्यते दीपौच्च्यनरयोर्भेदंकृत्वा
तच्छाययाहृतम्२८१ तत्कीलासंफलंदीपकीलयोःस्या-
त्तलान्तरम् भाग्रयोरन्तरच्छाभा भाभेदासाधराभवेत्
२८२ तद्भूमिनरयोर्घातंभासंदीपौच्च्यमुच्यते शंकु-
च्छावस्तुभाशंकोराभयासाफलंभवेत् २८३ तद्वस्तो
रुच्चताज्ञेया वस्तुच्छाशंकुभाथवा तद्वस्तोराभयाभ-
क्ताशंकुःस्यादनुपाततः २८४ दृक्सूत्रंदृष्टिकर्णः
स्याद्भाभूबाहुश्चभूर्भवेत् कोटयग्रंदृग्गृहंस्वेष्टदेशं-
तुल्यक्षितौभवेत् २८५ तद्दृग्गृहन्तुशैलाग्रंवृक्षाग्रंदीप-
कस्थलं छायाग्रेस्वस्थलंकिम्वाकोटयग्रेस्वस्थलंभ-
वेत् २८६ कोटयग्रेस्वस्थलंयत्र छायाग्रेदृग्गृहंभवेत्
तद्दीपौच्च्यकृतौदीपतलभाग्रान्तरस्यच २८७ वर्गमा
द्यंचतन्मूलंदृक्कर्णंतदुदीरितम् गम्यागम्यदृग्गृहान्तं
भेदंतत्स्वस्थलाद्भवेत् २८८ उदाहरणं दीपौच्च्यंद्वा
दशैस्तुल्यंयत्रदीपतलभूमिस्थानादामोन्मितेस्थानेभू
मौ अष्टसमंकीलमूर्द्धीकृतंचेत्तत्कीलस्याभांवद

अथवाद्वादशैव दीपोच्च्ये वेदोन्मिते शंकुदीपयोस्तला-
न्तरे नवभागतुल्यं शंकुमूर्ध्वीकृतं चेत्तच्छंकोराभां वद

न्यासः शंकुः ८ तलयोरन्त-
रं ३ दीपोच्च्यं १२ उक्तवत्कर-
णाज्जाता शंकु छाया ६ छायाशङ्कुभ्यां जातः कर्णः
१० छायाग्रदीपतलान्तर ९ दीपोच्छ्रितिभ्यां जातं पूर्णक-
र्णं १५ न्यासः दीपोच्च्यं १२ तला-
न्तरं ४ शंकुः ९ जाता शंकु छा-
या १२ उदाहरणं छायाशंकुतलान्तरै दीपोच्च्यं वद तथा
छायाशंकुदीपोच्च्यैस्तलांतरं वद न्यासः छाया ६ शं-
कुः ८ तलान्तरं ३ जातं दीपोच्च्यं १२ न्यासः छाया ६
शंकुः ८ दीपोच्च्य १२ जातं तलांतरं ३ उदाहरणं दी-
प प्रकाशे दीपतलात्किंचिद्दूरे द्वादशांगुल शंकु मूर्ध्वीकृ-
तं चेत्तच्छाया चाष्टांगुलोन्मिता जाता ततस्तस्मिन्ने-
व सूत्रे तच्छंकुस्थानात्सपादैक ५/४ हस्तोन्मिते दूरे
द्वादशांगुलं शंकुं स्थाप्य तच्छाया वेदयुग्मां २४ गुलस- •

माजातान्चेद्दीपौच्च्यंतथा शंकुदीपतलान्तरं वद न्यासः
अग्रांतरं ५६ शंकुः १२ छाया८ शंकुः १२ छाया२४ प्रथमछायाग्रदीपतलान्तरं२३ द्वितीयछायाग्रदीपतलान्तरं ६९ दीपौच्च्यं ३४ $\frac{१}{२}$ प्रथमशङ्कुतलदीपतलान्तरं १५ द्वितीयशंकुतलदीपतलान्तरं४५ प्रथमपूर्णदृक्कर्णवर्गः $\frac{६८७७}{४}$ द्वितीयपूर्णदृक्कर्णवर्गः $\frac{२३८०५}{४}$

अथदीपोच्च्यशङ्कुभ्यांदृक्कर्णपूर्णभुजयोरानयनम्.
शंकुवर्जितदीपौच्च्यकोटिजं दृक्श्रवःस्पृशन् बाहुमंकल्पयित्वात्तुतद्भुजस्य कृतौबुधैः २८९ दीपौच्च्यनरविश्लेषवर्गसाद्धैवतत्पदम् दीपौच्च्येन नरोनेन भक्त्वादीपौच्च्यताडितम् २९० तद्दृक्कर्णोभवेद्बाहुं हत्वादीपौच्च्यकेन च विनृप्रदीपकौच्च्येन भक्त्वास्यात्पूर्णदोर्धरा २९१ दृक्कर्णानयनार्थवाकोटिं दीपौच्च्य संज्ञकां कल्पयेत्स्वस्थले ह्मीष्टांतुल्येकौच भूमौ प्रसारिताम् २९२ दोर्भू

मिंदीपकौच्च्यंवादीपौच्च्यंदौर्धराबुधैः नरदीपौच्च्यभेदंभा शंकुदीपतलान्तरम् २९३ शंकुकल्पितबाहुभ्या शंकुकग्रंनिजस्थलं ध्यात्वा दृक्कर्णमानन्तुह्यानयेदुक्तवद्बुधः २९४ इतिछायाव्यवहारः

## अथांकाऽवयवानयनम्.

इष्टांकस्याऽवशेषंतु दशाक्षुण्णं[१०] हरोद्धृतं तत्फलंदशमांशः[१०] स्यातच्छेषं दशांताडितम्[१०]२९५ हारासंतच्छतांशः[१००] स्यात्तच्छेषंच दशाहतम्[१०] हारासंतत्सहस्रांशं[१०००] तच्छेषंच दशाहतं[१०] २९६ हारासमयुतांशः[१००००] स्यात्तच्छेषंदशामर्द्दितम्[१०] हारासंलक्षकांशः[१०००००] स्यात्तच्छेषंदशासंगुणं[१०] २९७ हारासंप्रयुतांशः[१००००००] स्यात्तच्छेषंदशताडितम्[१०] हारभक्तं फलंयत्तत्कोटयंशंपरिकीर्त्तितम्[१००००००००]२९८ एवंशेषंदशाक्षुण्णं[१०] हारासंचपुनःपुनः अर्बुदांशादिकंज्ञेयमंकस्याऽवयवं[१०००००००००] खलु २९९ उदाहरणम् खाक्षं[५०]विश्व[१३]हरेणैासमंऽकंसाऽवयवंवद न्यासः भाज्यः ५० भाजकः १३ लब्धं ३ दशांशं ८ शतांशं ४ सहस्रांशं ६ लक्षांशम्१ एवं ५।८।४.

६।१।५।८।४।६।१।५।८।४।६।१ एतद्यथाक्रमं
गा ३।८४६१५८४६१५८४६१५८४६१ इत्यंकाऽ
ायवानयनम्. अथ गणितपाशव्यवहारः
भेदाःस्युर्देशघातंतुतच्चांकैक्येनमर्हितं देशासंदेशतु-
ल्यंतंस्थानद्वन्द्वयाहिसंयुतं ३०० कृत्वासंख्यायुतिस्त-
दविज्ञेयागणकोत्तमैः उदाहरणम् द्विकाष्टकाभ्यांसं-
ख्याभेदान्संख्यैक्यंवद् तथात्रिकनवकाष्टकैस्संख्या
भेदान्संख्यैक्यंवद् तथायुग्मादिपञ्चान्तैः संख्याभेदा
न्संख्यैक्यंवद् तथाचैकाद्यष्टपर्य्यन्तैस्संख्याभेदान्संख्यै
क्यंचवद् न्यासः २।८ अत्रदेशद्वयं १।२ घातः २ जातौ
संख्याभेदौ २ यथा २८।८२ अथस एव घातो२ कैक्य
१० घ्नः जातः २० देशसंख्यया २ भक्तः फलं २० देशद्वये
स्थानद्वन्द्वयायुक्तंजातं १६० संख्यैक्यं ११० द्वितीयन्या-
सः ३।९।८ अत्रदेशाः १।२।३ घातः ६ भेदाः ६ यथा
३९८।३८९।८९३।८३९।९३८।९८३ अंकानांयो
गेन२० निघ्नाः १२० देशत्रयेण भक्ताः फलं ४० स्थान

रुद्धया देशात्रयेयुक्त्वा ४००० ४८ जातंसंख्यैक्यं ४४४०
तृतीयन्यासः २।३।४।५ देशाः १।२।३।४ वधं २४ भेदाः
२४ संख्यैक्यं ९३३२४ चतुर्थन्यासः १।२।३।४।५ भे-
दाः १२० अंकै १।२।३।४।५ क्य १५ भेदाः घ्नं १८०० देशा-
साः फलं ३६० संख्यैक्यं ३९९९९६०

## अथ विशेषभेदानयनम्.

यावद्देशेषुतुल्यांकास्तत्प्रकारैः पृथक्कृतैः ३०१ प्राग्भेदा
उद्धृता भेदास्तत्संख्यैक्यंचपूर्ववत् उदाहरणम् द्विद्वये-
कचन्द्रैस्तथायुग्माष्टपंचेष्वक्षैः संख्याभेदान्सख्यै
क्यंवद न्यासः २।२।१।१ अत्रप्राग्वद्भेदाः २४ अत्र
देशद्वयेतुल्यांकौतर्हि प्राग्देशद्वयाज्जातौ भेदौ २।२ अ-
ग्भेदाः २४ समंभेदयोग ४ भक्ताः फलं ६ जाताः भेदाः
६ तद्यथा २२११।२१२१।२११२।१२ १२।१२२१।
११२२। प्राग्वत्संख्यैक्यंच ९९९९ अपरंन्यासः ४।
८।५।५।५ प्राग्वद्भेदाः १२० देशत्रयोत्थ ६ भेदै र्भक्ताः
फलं २० जाताः भेदाः २० तद्यथा ४८५५५।८४५५५।५४८५५

एवंविंशान्विताः ज्ञेयाः संख्यैक्यंच ११९९९८८

## अथांकपाशान्तरम्

एकैकेनोन संस्थानितांकानियदित्तत्रच ३०२ अंकाना माद्गनिधीरैस्संख्याभेदाउदीरिताः उदाहरणम् एकैक हीनषड्देशास्थितांकानांसंख्याभेदान्वद न्यासः ९।८।७।६।५।४ एषांघातेजाताःसंख्याभेदाः ६०४८० अथांकपाशान्तरम् निरंकचांकसंयोगाद्वेकादेकै केवांजैनान् ३०३ व्यस्तानेकोनदेशेषु विन्यस्यैवक्र मस्थितैः भक्ताद्येकस्थलैः क्षौद्यैस्तान्भेदाःस्युस्तुतद्धयं ३०४ उदाहरणम् पञ्चदेशस्थैर्यद्योगोविंश्योन्मितं भवति तत्संख्याभेदान्वद न्यासः अत्रांकैक्यं १३ व्येकं १२ देशाः ५ व्येकदेशः ४ अंकैक्यं १३ व्येकं १२ एतन्निरेकस्थानान्तम्४ एकैकरहितंविन्यस्य १२।११।१०।९ क्रमस्थैरेकादिभिर्भक्ता $\frac{12}{1}$।$\frac{11}{2}$।$\frac{10}{3}$।$\frac{9}{4}$ घातंसंख्या भेदाः४९५ इत्यंकपाशः ३०४. **श्रीलक्ष्मीवल्लभात्मजप्रे मवल्लभविरचिते परमसिद्धान्ते गणितभागाधिकारः प्रथमः**

## अथ घट्यादिमानानि

प्राणैः खांगाग्नि भिर्लिप्तास्यात्तत्षष्ट्या दिनं भजम् स्या
न्मासंसावनंत्रिंशद्वासरैः सावनै र्भवेत् १ त्रिंशद्भिस्ति
थिभिश्चैकं चान्द्रमासमुदीरितम् सूर्यसंक्रमयोर्मध्ये
सौरमासंमुदीरितम् २ स्वमासै र्द्वादशै र्वर्षं विज्ञेयं गण
कोत्तमैः सौरवर्षनराऽब्दः स्यात्स्यात्सौराऽब्दोऽर्कवत्स
रः ३ सौराऽब्दं सुरदैत्यानां घस्रं दिव्यदिनं भवेत् दिव्यैः
खांगाग्निभि ३६० र्घस्रैर्वर्षः स्याद्देवदैत्ययोः ४ तदेव
दिव्यवर्षैः स्याद्दिव्याऽब्दैः खखखखाऽर्कभिः स्याद्युगस्त
सत्यं १७२८००० त्रेत १२९६००० द्वापर ८६४००० कलिः ४३२००० युगं ४३२००००
त्कृतादीनामल्यानामैक्यमुच्यते ५ तद्युगस्यदशांशस्तु
चतुस्त्रिद्व्येकताडितः क्रमशः सत्यपूर्वाणामऽल्याना
म्मितयोमताः ६ सत्येत्रेतायुगेचैव द्वापरेचकलौतथा
संधिः सूर्यांशिकंस्वस्वप्रारम्भदिवसोत्तरम् ७ स्वस्व
पूर्णदिनात्पूर्वमेवंसंधिः स्मृतोबुधैः सत्वाद्यैक्यंयुगंदि
व्यंयुगैर्दिव्यैः खखांगुलैः ८ स्याद्ब्रह्माहर्निशंतस्य
त्रिंशद्भिर्मासमुच्यते तैरर्कैर्वत्सरंज्ञेयंतैः शतैरायुरु

५०
च्यते ९ ब्रह्मणस्त्वायुषश्चैवयाताः पूर्वार्द्धवत्सराः पंचा
५०
शांद्धोग्यवर्षाणाम्मध्येऽयंप्रथमंदिनं १० ज्ञेयंब्रह्मदिने
१४४०००१२०
यातसौराऽब्दाः परिभाजिताः प्रयुतघ्नैर्युगेन्द्रैःस्युर्लि-
४३२००००००
प्ता ब्रह्मदिनेगताः ११ कोटिघ्नैर्द्व्यर्थत्रिवेदाब्दैर्ब्राह्मकल्पं
३०
नृणां भवेत् तदेवब्रह्मणो घस्रमानंत्रिंशत्कलोन्मितं १२
स                                                    शयनी
सूर्योदया· त्तथानृणामुद्यमाद्या भवन्तिहि रात्रौस्वा
पादिकंतद्ब्रह्मणः परिकीर्त्तितः १३ शयनेप्रलयंतस्य
मरणेविलयंभवेत् यथारात्रिद्युमानौस्तस्तथामरणजी-
घट
वनौ १४ यद्वत्कुम्भकराः कृत्वासचक्रान्मृत्तिकाघटान्
घट
स्वार्थंकुर्वंतिह्यीत्थंतु नित्यंकुम्भक्षयोद्भवे १५ यथाचैकै
कचक्रंतुकुर्वंति घटकारकाः देहाऽवसानपर्य्यन्तं यत्ना
च्चक्रःस्थिरोभवेत् १६ ततस्तद्विलयंयाति ह्येवंतद्वद्विधे
रपि भूःस्थिरामृत्समाःप्राणा जीवाः कुम्भसमाःस्मृ-
स्
ताः ७७ भूगोलाद्दूरसंस्थत्वान्नित्यमाप्रलयंरविं पश्य
ब्र:
त्येवहिलोकेशस्तस्माद्ध्य अंदशै १०००र्युगैः १८ दि-
५०
व्यैर्विधेर्द्युमानंस्यात्तद्वद्रजनीभवेत् मध्याह्नतच्छुत

घ्नाऽक्षैः सूर्याऽस्तंरवरवदिद्भिःतैः १९ रात्र्यऽर्ढ्रवस्व पञ्चाक्षै रात्र्यन्तंरवरवरवान्तकैः दिव्यैर्युगैर्भवेदत्र्यु-गंदिव्यंयुगंमतम् २० यद्देहाद्यो भवस्तास्मिंल्लीनस्त-त्प्रलयेविधेः स्यात्सूर्य्योनेत्रजश्चेन्दुर्मनजोमुखजः शि-खी २२ कर्णजो मारुतः प्रोक्तःकर्णजः प्राणउच्यते-नाभिजंत्वऽन्तरिक्षस्या द्ब्राह्मणोमुखजो भवेत् २२ एवंवे-दोदितंसर्वं विज्ञेयंब्रह्मदेहजम् स्वप्रभाते विधिस्त्वेता-न्नित्यमुत्पादयत्यऽतः २३ भूगोलो ब्रह्मदेहान्तपर्य्य-न्तंसुस्थिरोदितः

## ब्रह्माण्डादिकज्ञानम्.

नारिकेल फलस्यैव काष्ठवद्गोलकाकृतिः २४ ब्रह्माण्डो महदाकाशेचोत्पन्नस्त्वीश्वरेच्छया वाकटाहद्वयस्यै वसंपुटो गोलकाकृतिः २५ ईश्वरस्येच्छयोत्पन्नोब्रह्मा एडस्त्व एडसद्दशः ब्रह्माण्डस्योदरे भूमिर्भूमेर्बाह्यंस-मंततः २६ आकाशे खेचरा मेघपूर्वाश्चैवांशुगा नगाः भूगोलाद्योजनैस्सूर्य्यैर्भूवायुरूर्ध्वगःस्मृतः २७ तदूर्ध्वऽ-श्चेर्ज्वलनंतूर्द्धंतस्योर्द्धंचावहाऽनिलः तद्याम्योन्तरवे

गस्स्यान्ततोर्द्ध प्रवहाऽनिलः २८ तत्पश्चाद्गतिराख्याता
राशिचक्रस्यदर्शनात् खेचराः स्युस्तदाधीनाश्चंद्रविद्धु
क्रभास्करा: २९ भौमेज्यार्कस्रुताश्चाऽथ भानितारागि
नत्क्रमात् ततःसमीरणाश्चाब्धिप्रमिता ऊर्द्धतोर्द्धतः ३०
उद्वहःसंवहश्चैव सुवहश्चपरावहः लोकाः ७ भूर्लोकं
दक्षिणव्यक्तान्तस्मात्सौम्यसऽयंभुवः ३१ स्वर्लोकंतुसु-
मेरुः स्यात्खेमहश्चजनस्ततः ऊर्द्धतपस्ततः सत्यंब्रह्मा
एडाऽभ्यन्तरे भवेत् ३२

## समुद्रद्वीपादिकम्.

समुद्र भ्रमणंसूक्ष्ममतिदीर्घं प्रजायते तद्धिधापूर्वपश्चा
च्चयाम्योदग्गमनंतथा ३३ यत्रेदानींसमुद्रोस्ति तत्स-
न्सिन्धुः प्रकीर्त्तितः यत्रेदानींना र्णवोस्तितद्विसिंधुःप्र
कीर्त्तितः ३४ अतीवचिरकालेन साऽर्णवस्थानतोऽर्णवः
व्यऽर्णवस्थानकंयातिसाऽर्णवोव्यऽर्णवोच्यते ३५ यस्मा-
त्पूर्वबुधैरुक्ता लंकादेवगृहादयः पत्तना विजलस्था
नेसिन्धोर्भग्नास्तुसंप्रति ३६ असम्भवजलस्थाने चूर्णो
स्थप्रस्तरादिभिः मन्यन्तेऽत्रप्रतीतिंतुधीराः सिद्धान्त-

कारकाः ३७ त्रिभा[३]गंपृथिवीमध्येसामुद्रांबुचबाह्यतः भूमिः पा[४]दांशकंबाह्यात्प्रत्यक्षंदर्शिताजनैः ३८ समुद्रं केवलं भूमौमृद्गुणाद्दर्शनादिभिः तन्मामानिततोलोकैः कथिताऽन्यप्रमाणतः ३९ समन्ताज्जलधेर्मध्यभूमिस्तद्वीपमुच्यते द्वीपोनसमकोणःस्यान्नचद्वीपाः समाःस्मृताः ४० नद्वीपाः कुण्डलाकाराः नद्वीपा दर्पणोदराः द्योःस्वल्पैरम्बुदैर्युक्ताविषमाः कुत्रकुत्रचित् ४१ हृद्यन्तेत्राः[मेघा]म्बुदास्तद्वद्वीपा भूमौप्रकीर्त्तिताः लवणाख्या[३]ऽर्णवात्सौम्येमेरोः सानिध्यदेशतः ४२ यास्येतदन्तरंद्वीपंजम्बाख्यंविषमंमतम् नैर्ऋत्याग्नेयदिग्दैर्घ्यंभूमिदि[१०१]ग्भागकोन्मितम् ४३ वायव्याग्नेयदिग्दैर्घ्यंवसु[८८]नागांशकोन्मितम् पश्चान्नैर्ऋत्यदिग्दैर्घ्यंगो[१२५]श्चन्द्रांशकोन्मितम् ४४ द्वीपंतद्वीपराजः स्यात्तस्माद्ऽत्यानथोच्यते लंकातः पश्चिमेव्यस्तेतत्त्व[२५]षष्ठ्यं[६०]ऽशकान्तरे ४५ तद्वथस्याद्या[२]म्यगत्र्यं[३]शांतिर्य्यक्पंचा[२५]ग्निभिर्लवैः तद्वि[२]घ्नं ह्यायुदिग्वातस्मिंश्चाख्यंद्वीपमुच्यते ४६ सिद्धानांपत्तना

१५० पलभागतः ७५ पलांशा
स्सौम्ये तिर्य्यक्कृतिर्य्यस्तभागतः पञ्चाग्न्याऽक्षांशपर्य्यन्तं
तद्द्वीपमऽमराभिधम् ४७ तदेव कुरुपूर्वाणां वर्षाणां स्था-
नमुच्यते तत्तिर्य्यग्भग्नकुटिलपत्राकारः समः स्मृतः ४८
तस्याग्रे याम्यगं तस्य मूलं मेरुसमीपगः आमेरण्डदलाका-
रं जम्ब्वाख्यं द्वीपमुच्यते ४९ तन्मूलं मेरुसानिध्यमऽग्रं-
भारत किन्नर हरि
तद्ध्यऽक्षसन्मुखम् तदेव भारतादीनाम्वर्षाणां स्थानमु-
च्यते ५० सिद्धानां पत्तनात्पूर्वं पश्चाद्रोमकपत्तनात् व्य-
६ उ द
क्षे व्यक्षात्तद्भसांशं सौम्यगं दक्षिणोऽखिलम् ५१ वायव्या
उ ६
ग्रे च विस्तारं सौम्याऽपाग्दैर्घ्यमीरितम् अमरद्वीपवत्त-
द
त्स्यात् दैर्घ्ये विस्तृतावपि ५२ तस्यांऽग्रं याम्यगं तस्य मू-
लं व्यक्षगतं मतम् अमरद्वीपवद्द्वीपं दक्षिणाऽमरमुच्यते
६० द १५
५३ प्राक्पश्चयंशेषु लंकातो यद्व्यक्षं तस्य दक्षिणे तिर्य्य
३५ कलाशानां पू प
क्षाग्न्यस्तभागानामध्ये द्वीपं नवं मतम् ५४ प्राक्पश्चात्त-
३० द उ २०
स्य दैर्घ्यन्तु त्रिंशद्भागमितं मतम् याम्योत्तरन्तु विस्तारं खां
श्व्यंशप्रमितं मतम् ५५ तद्भग्नपाविकापत्रवत्तन्मूलं तु-
ग्राम्यगम् विज्ञेये कार्मुकाकारे द्वीपानां दैर्घ्यविस्तृती ५६

अत्रान्ये लघवो द्वीपा नोदिता विस्तृतेर्भयात्

## हिमालय भारतादि खण्डत्रयज्ञानम्

उ ३०
लंकातश्चोत्तरे त्रिंशदंऽशांशप्रमिते गिरिः ५७ यत्त हि
हिमाचलः पू प
मालयाख्योद्रिस्तच्छैलेन्द्रश्चकीर्त्तितः प्राक्पश्चाद्दी-
हिमालय
र्घतातस्य प्रत्यक्षंपरिदृश्यते ५८ लंकाशैलेन्द्रयोर्मध्ये
उ चीन
वर्षं भारतमुच्यते तद्वत्तस्योत्तरे देशो प्राचीनखण्डमु
च्यते ५९ तदेवकिन्नरोवर्षः पूर्वाचार्य्यैः समीरितः त-
उ महाचीन
त्सौम्येहरिवर्षस्तु महत्प्राचीनमुच्यते ६०

## वर्णव्यवस्थितिः

उ प हिमाचलात्
लवणाख्यांऽर्णवात्सौम्ये वंगालात्पश्चिमेतथा शैलेन्द्रा
द पू ब्रा क्ष
द्दक्षिणेपूर्वेद्य्ऽटकाख्यनदात्तथा ६१ वर्णा विप्रादयो
वै शू ऋक् यजु साम अथर्वण चांडालाः
वेदा ऋक्पूर्वास्थितश्चमताः बाह्येसर्व देशेषु चाऽन्त्य
द
जा निवसन्तिहि ६२ याम्येत्र्हलवंसिन्धोस्स्वल्पांशमु
उ
त्तरेगतम् यत्राऽतिदैर्घ्यविस्तारवेधाः स्युस्सागरस्यच
६३ तन्महासागरस्तत्रतेऽल्पाश्चेदऽल्पसागरः स्यादेक
सिन्धुनाभूमिस्समन्ताच्चैववेष्टितः ६४ यत्रोच्चासिं-

धुतः पृथ्वीद्वीपंतत्रैवजायते सिंधोश्चतुर्द्विशोज्ञेयाः सा-
गराः युगसंमिताः ६५ लंकाद्याःपत्तना देवनिर्मिताः
मुनिभिर्मिताः षट्संख्यकाः समुद्रस्यतोयेना ऽन्तरिता
क्षितौ ६६ अल्पादऽल्पतराश्चैवंचाऽधिकादऽधिकास्त-
था ब्रह्माण्डाकृतयोगोलाः सिन्धावन्तरिताः पृथक् ६७
पृथक्चाऽतिगम्भीरस्थाःकेचिदुच्चजलस्थिताः केचिन्नि-
थोहग्रवाभ्यांहीना दूरंगता यथा ६८ संख्याहीनास्तु
ब्रह्माण्डाः स्वसंख्यारहितेस्थिताः तद्वन्मेघेचाऽबुकं-
णा वालुकानितृणाः क्षितौ ६९ संख्यारहिता एवंब्र-
ह्माण्डाईश्वरस्यहि तेषाम्मध्येविदं ह्येकंब्रह्माण्डंप-
रिवर्त्तते ७० षड्राशिस्थाप येकबुद्धिश्चज्ञेयाःसप्तार्णवा
बुधैः

## भूव्यासपरिधिज्ञानम्

भूगोलपरिधेःस्वाअवङ्का ३६०० योजनाः स्मृताः
७१ अक्षांशैर्मापितो भूमेर्बिम्बः स्याद्योजनैः स्फुटः

## भूपृष्ठग्रहयोरन्तरंलोकार्द्धव्यासम्

स्वेटंकक्षाण्डलोकानांव्यासाद्भूव्यासवर्जितात् ७२

यत्खण्डं पृथिवीपृष्ठखेटकक्षांतरं भवेत् काश्यपीस्फु-
टबिम्बघ्ना दिग्युग्मोरगयोजनाः ७३ सत्यवेगघटीभ-
क्ता लोकव्यासाऽर्द्धमादिशेत् **भूपरिध्यानयनम्**
सत्यभुक्तिकलाऽभ्यस्ता लोकाऽर्द्धव्यासयोजनाः ७४
खेन्दुयुग्मगजैराप्ताः स्युर्भूपरिधियोजनाः **दिग्ज्ञानम्**
स्वव्यक्षात्प्राग्दिशंव्यक्षेयत्तत्पूर्वदिशं भवेत् ७५ इत्थं
तत्पश्चिमंपश्चान्मध्येयाम्योत्तरं भवेत् सर्वेषामुत्तरंमे
रुर्याम्यः स्याद्वडवानलः ७६ सिद्धानांनगरंलंकाऽधः
स्थानंविबुधोदितम् भूवृत्तपादेलंकायां यमकोटि
स्तुप्राङ्गता ७७ भूवृत्तपादेलंकायाः पश्चाद्रोमपुरी
स्मृता भूवृत्तपादेलंकायाः सौम्येदेवपुरीस्मृता ७८
भूवृत्तपादेलंकायां याम्येदैत्यपुरीस्मृता दैत्यालयेऽन्त-
कस्थानंतस्माद्याम्यंतदुच्यते ७९ याम्यंदेवालयात्सर्वं
सौम्यंदैत्यालयात्तथा इन्द्रादिस्थानबोधार्थं मेरोः प्रो-
क्तं चतुर्दिशम् ८० यतोऽयनांशकैस्सूर्य्यस्संस्कृतो
मेषेभंगतः यमकोटिस्थलंमेरुदेशस्थैःपरिदृश्यते ८१

अस्तस्तन्मेरुवासीनां यमकोटिस्तु प्राङ्गता मार्गशी
र्ससंस्कृताऽर्कस्य तुलासंक्रमवासरैः ८२ रोमकेऽस्तम-
यं याति पश्चिमं रोमकं ततः दैत्यानां तद्विलोमं तु ह्यदयास्त
स्थलं भवेत् ८३ स्वस्वप्राक्सन्मुखो भूत्वा दक्षिणं दक्षिणे
करे वामं वामकरे स्थानज्ञानार्थ समुदीरितम् ८४ भूवृत्तां
घ्यन्तरा द्वेमौज्ञेयाः षड्वेवपत्तनाः दिगुत्पत्तिः
तुल्याह्नेऽर्कोदयस्थाने भूत्वाऽभिवदनं नरैः ८५ सन्मु-
खं प्रागिदिशं ज्ञेयं पृष्ठं पश्चाद्दिशं मतम् वामपाणिदिशं सौ
म्यं याम्यं दक्षिणहस्तगम् ८६ एवं दक्षिणहस्तं च ह्युत्ता-
नं पूर्वदिग्गतम् तत्र मध्यांगुलिः प्राक्स्याद्याम्यमंगुष्ठ
दिग्भवेत् ८७ पश्चिमं करमूलः स्यात्सौम्यं स्वल्पांगुलि
र्भवेत् कनिष्ठांगुलिदिग्देवा विश्वेदेवादयः स्मृताः ८८
भानोः पूर्णोऽपमांशोनखांकाऽक्षांशान्तरेत्वऽयम् स्वव्य
क्षस्थानतः सौम्ययाम्ये दिग्ज्ञानमीरितम् ८९ यमको-
टिस्थलादेवं सौम्ये मेरुरुदीरितम् दक्षिणे तत्कुमेरुश्च
पूर्वस्यां सिद्धपत्तनम् ९० पश्चिमस्यां तु तल्लंका विज्ञेया

गणा कोत्तमैः यमकोटिस्थलाऽधःस्थं रोमकं समुदीरि
तम् ९१ एवंसिद्धपुरात्सौम्ययाम्येमेरुकुमेरुकौ वि-
ज्ञेयौ रोमकं पूर्वे यमकोटिस्तु पश्चिमे ९२ ज्ञेया सिद्धपुरा
ऽधःस्यालंका ज्ञेया विचक्षणैः सुमेरोर्दक्षिणस्थाने य
मकोटिरुदीरिता ९३ लंकारोमकपूर्वाणां कुमेरुर्द
क्षिणे मतम् सुमेरुश्चोत्तरे प्रोक्तमेवं सर्वविनीस्थलात् ९४

## अथ भूपिण्डानयनम्

तिर्यग्याम्योत्तरं तद्वदूर्द्ध्वं पूर्वापरं भवेत् पुरयोरन्तरेति
र्यग्भूमिश्चक्रलवाहृताः ९५ तयोर्नगरयोरक्ष भाग
विश्लेषभाजिता लब्धं भूपरिधेर्मानं स्यादेतत्त्वनुपातज
म् ९६ कक्षाक्रमम् भूस्वपिण्डेन्दुविच्छुक्रार्ककु
जज्यार्किभानि च हिस्वशात्स्योपर्य्युपरि खेत्वाधारं
विनास्थिताः ९७ भूगोलनिश्चयम्
भूपृष्ठः सर्वतो ग्रामाऽद्यंऽबुचित्यादिभिर्युतः किञ्ज
ल्कप्रकरैरस्ति प्रणामीपुष्पगोलवत् ९८ अपक्की कुसु
माकारं प्रणामी कुस्मतथा कदम्बकुसुमाकारबबूल

पुष्य पचार्द्धं वा १८० भागेषु
कुसुमम्मतम् ९९ स्वस्थानात्सर्वतोवृत्तखण्डेस्याधः
सुमेरु
स्थलं भवेत् ज्ञेयंमेरुद्वयोर्मध्येस्यान्यंस्याऽधःस्थलंमिथः
सुमेरोः
१०० देवालयस्यपातालंयमसद्मबलिगृहं जायतेतकु
मेरुश्चपरमेरुश्चतद्भवेत् १०१ भूपृष्ठेयत्रयेसंस्थाश्चा
९००
त्मानंमुपरिस्थितम् मन्यन्तेनिजदेशात्तु भूपादेतेपरस्प
रम् १०२ तिर्य्यग्वत्संस्थितानऽन्यान्पातालस्थांऽभि
स्वस्थानम्
सन्मुखम् निजपाताल भूपृष्ठंयद्वत्तद्वाभिजस्थलम् १०३
तस्माद्विज्ञेयमाखस्थेगोलेकोर्द्धस्तुकोप्यऽधः ह्रस्वां
गत्वाज्जना एवस्वस्थानात्सर्वतस्सदा १०४ अवपद्य
न्ति भूगोलंचक्राकारसमंखलु शीतोष्णस्थानज्ञानं
स्वस्थानतया सू
तत्स्थानाकृतयायत्रत्वंऽशवः प्रपततिहि १०५ भानो
स्तच्छीतलंदेशात्तद्वस्तेचोष्णमीरितम् ऋतुज्ञानम्
विपर्य्ययाऽदहोरात्रमऽन्योन्यंदेवदैत्ययोः १०६ स्याद्वे
अयनांशैः सू उ
न्मार्गलिवै भानुः संस्कृतःसौम्यगोलगः स्युस्तर्ह्यऽर्क
सू
करास्तीव्रा ग्रीष्मेदेवलवक्षितौ १०७ देवानांदर्शनंया
दैत्यानां रात्रि
त्तितस्माद्देवदिनंभवेत् तद्दिनंदेववैरिणांयामिनीकि

सू द दिनम्
लजायते १०८ सूर्यश्चेद्याम्यगोलस्थःस्याद्युमानसु
दैत्यानाम् सू उ
रद्विषाम् तन्मध्येऽर्ककराः शीता हेमन्ते सौम्य भूदले
दिनं रात्रि * दे वांशे
१०९ तद्बस्नरजनीमानं देवानांजायते किल भूमौसौ-
उ दैत्यांशे ४ शरद्वसंतः
म्यार्द्धयाम्यार्द्धे स्यान्मिथश्चतुर्थीक्रतुः ११० शरद्वसन्त
वसंतशरत्
योर्व्यस्तंग्रीष्महेमन्तयोस्तथा वर्षाशिशिरयोर्ज्ञेयंया
द
म्याख्ये भूदले बुधैः १११ व्यसाद्दक्षिणे गोलज्ञानम्
उ द
सौम्याऽर्द्धक्षितिवत्सर्वंज्ञेयंयाम्यदलस्थितौ स्युश्चाऽ
पलभा पलांशाः लंबांशाः उ उ द मेषादेतुलादिज्ञं ध
क्षभाक्षलंबांशाः सौम्या गोलंयथोचितम् ११२ स्या-
क १ ७ १ क ७ ध उ
त्स्वर्णं मेषजूकादिगोलजंव्यस्तकं भवेत् सौम्यभूम्य-
द
र्द्धवद्याम्यभूम्यर्द्धेपिगतिर्भवेत् ११३ । ४१७

## श्रीलक्ष्मीवल्लभात्मजप्रेमवल्लभविरचिते परमसिद्धान्ते गोलाधिकारो द्वितीयः २

---

* देवानां रात्र्यर्द्धे दैत्यानां दिनार्द्धं देवानां दिनार्द्धे दैत्यानां रात्रिदलम् देवानां सूर्योदये दैत्यानां सूर्यास्तं देवानां सूर्यास्ते दैत्यानां सूर्योदयं भवति.

## अथपितृदिनोत्पत्तिः

चन्द्रोर्द्धशेतुपृष्ठांशेपितृणांस्थानमुच्यते तिथिमासे-
नपितृणांद्युनिशंस्याद्यंतस्ततः १ दर्शान्तेद्युदलं कृष्ण
पक्षाऽर्द्धे भास्करोदयम् सूर्य्योऽस्तंशुक्लपक्षार्द्धे शु-
क्लान्तेस्यान्निशादलम् २ मेरुमध्याह्लादिज्ञानम्
एवंमेरुनिवासीनांदेवानामयनांशकैः संस्कृतेकर्कगे
ह्लाऽर्द्धमजगेर्केखिनोदयम् ३ सूर्य्योऽस्तंजूकगेतस्या
न्मृगगेतामसीदलम् एवंदैत्यालयस्थानांव्यस्तंस्याद्यु
दलादिकम् ४ ऋतुरादिज्ञानम्.
संस्कृतोऽर्कोऽयनांशैर्यत्संस्कृतोऽर्कस्तुतद्भवेत् संस्कृ
तान्मृगगादर्कात्परामासाउत्तरायणम् ५ स्यात्तद्वत्क-
र्कगाद्दर्कात्परामासा दक्षिणायनम् संस्कृताच्चापगा
दर्कांद्धेमन्तं भद्वये भवेत् ६ संस्कृतात्कुम्भगादर्का
च्छिशिरंभद्वयेभवेत् स्याद्वसन्तोऽजगादर्कात्संस्कृ
ताद्भद्वयेऋतुः ७ एवंग्रीष्मादयोरासाः ऋतवःक्रम
शोदिताः वर्षमानोत्पत्तिः.

न्निर्वेधाऽभ्युदयस्थानेश्शुद्धे तुल्यक्षितौबुधैः ८ वृत्तं
३६० पू.द.प.उ.
कृत्वाऽङ्कितंचक्रभगैः सर्वदिशान्वितम् घस्रेऽभ्रक्रा
न्तिजेभानोर्भास्कराऽर्द्धोदय क्षणे ९ दृश्यते यत्रतद्वृ-
त्ते भानुस्तत्राऽङ्कमाचरेत् तद्वितीयदिनेभानोरर्द्धबि-
म्बोदयक्षणे १० तत्पूर्वाऽपरगारेखामुल्लंघ्यैवरबि-
स्तथा तद्वृत्ते दृश्यते यत्र तत्राऽप्यंऽकं समालिखेत् ११
पूर्वाद्यंऽकांशभेदघ्नाः सावनाः षष्टिलिप्सिकाः द्विती-
प्रथमाचिह्न द्वितीयचिह्नयोः
याद्यंऽकयोर्मध्यभागैर्भक्ताः कलादिकम् १२ पंचांग
३६५ दिनादि
वह्निभिर्घस्रैर्युक्तंलिप्सास्थलेफलम् कृत्वाघस्रादि
३६५।१५।३१।३१।२४
कंसौरवर्षमानंतदुच्यते १३ यथाकश्चित्तुसूर्याऽभ्रं
क्रान्तिजेभास्करोदये मध्यपूर्वस्थले भानुश्चोदयंया-
तितद्दिनात् १४ नित्यंप्रत्युदयान्दृष्ट्वातत्प्राग्देशोदया
वर्षान्ते
दिकान् भानोः प्राग्देशतः पृष्ठभागेतद्वत्सरांतके १५
जायतेऽर्कोदयंचाऽन्यवर्षारम्भेऽखिलोदयम् स्याद्यत्राऽ
पूर्ववर्षान्तापरवर्षारंभार्कोदयस्थानयोः
र्कस्यतत्तत्रचोदयस्थानयोर्द्वयोः १६ मध्यभागोद्धृता
६०
भानोः सावनाः स्वांगनाडिकाः वर्षान्ताऽर्कोदयस्थान

पूर्वभेदाद्ाकाहृताः १७ लब्धंकलादिकं युक्त्यादर्शिताऽ
सू० ३६५ ३६५।१५।३१।३१।२४
कोदयैक्यके तल्लिप्तादिस्थलेतस्याद्वर्षमानदिनादिकम्
सू०
१८ निर्वेधाऽस्तमयस्थानेवाऽर्को भ्रक्रान्तिजेदिने इत्थं
सू०
स्त्तेरवेरऽर्द्धविम्बाऽस्तंपरिदृश्यते १९ यत्राऽकमाच
सू०
रेत्तत्र भानोस्तदऽपरेहनि दृश्यते ह्यऽर्द्धबिम्बाऽस्तं यत्र
पृ०
तत्राऽकमाचरेत् २० पश्चिमाद्यऽकयोर्मध्यभागाश्चि-
चिन्ह दितियात्स्वद्वयोः दिनादि ३६५
ह्नान्तराद्धृताः लब्धघस्त्रमुखं पंचषड्रामैर्दिवसैर्युतम्
३६५।१५।३१।३१।२४
२१ कृत्वा घस्त्रमुखं सौरवर्षं तत्परिकीर्त्तितम् कस्मिं-
श्चित्संक्रमस्थाऽह्नात्पुनस्तत्संक्रमं भवेत् २२ गणे
३६५
नाद्यैर्दिनैस्तेऽह्नाः स्युः पंचांगगुणोन्मिताः यैरऽह्नैर्वा
सू० १२
ऽर्कं मध्यस्थचक्रं पूर्णं प्रजायते २३ तेऽह्ना भूपृष्ठसं-
स्थानां वर्षमानस्यकीर्तिताः तेऽह्नाद्याः सावना ज्ञेयाः
दि ३६५ घ १५ प ३१ विप ३१ प्रप ३१ संप २४ ३६५।१५।३१।३१।२४
पंचांगशिखयोदिनाः २४ कध्ययःकध्ययः सिद्धाउदया
सू०
दुदयं रवेः एकसावनघस्त्रं स्यादेवं वर्षमिति भवेत् २५
४३२०००
वर्षैः शून्यरवरवाभ्राब्धिगुणवेदैर्युगो भवेत् **अंकसंज्ञा**
३ ४ ५ ६
टोरामश्चोयुगः प्रोक्तो पोड्रास्छोरसस्तथा २६ सोनं

उदाहरणम् . यथाबाहुः १५ कर्णः २५ कर्णव-
र्गः ६२५ बाहोः स्थानद्वयत्वात्कर्णवर्गस्य द्विती-
यस्थाने चिह्नं कृत्वा जातं ६२५ चिह्नाधः स्थाना-
द्बाहुं भागदानार्थं प्रथमं लिखित्वा जातम् $\frac{६२५}{१५}$
प्रथमांलब्धिमेकां १ मानयित्वा जातम् ४७५
ततः बाहुमुत्थाप्य एकस्थानन्यूने स्थाप्य जातम्
$\frac{४७५}{१५}$ तत्र द्वितीयांलब्धिं पंचोन्मिता ५ मानयित्वा
शेषम् ४०० अस्यमूलं कोटिः २०

## अथ प्रकारान्तरेण

बाहुस्थानसमात्कर्णवर्गाद्बाहोस्समपदम् आ-
नयित्वा तच्छेषमूलं कोटिः प्रकीर्त्तिता १०२
उदाहरणम् यथाबाहुः १५ कर्णः २५ कर्णवर्गः
६२५ अस्मिन्नोजद्वयं भुजस्यापि स्थानद्वयम् त-
स्माद्धेतोः ६२५ वामौजात्पणिमितादेकंपद १
मानयित्वा जातम् ५२५ द्विघ्नंपदं २ द्वयस्याधो
देशे स्थाप्य जातम् $\frac{५२५}{२}$ अत्र पञ्चोन्मिता ५

लब्धिमानयित्वाजातम् ४२५ अत्रलब्धेः ५ पञ्चोन्मितायाः वर्गं २५ हृतस्यादिविषमा- न्त्यक्त्वाशेषंकोटिवर्गजातम् ४०० अस्यमूलं कोटिः २० एवंकोटिकर्णाभ्यांबाहुःस्यात् एवंकोटिकर्णाभ्यांभुजानयनम्. कोटिम्बा- हुरितिज्ञात्वाप्रोक्तवज्जायतेभुजम्.

## अथ प्रकारान्तरेणज्योपपत्तिः

अथगुप्तप्रकारैस्तुज्योत्पत्तिंकथयाम्यऽहम्
अर्द्धं अर्द्धं
१०३ भोग्यचापदलंकोटिर्भुक्तचापदलंभुजः
५७।१७।४२. भु
ज्ञेयोव्यासदलमान्यंप्रोक्तंदोर्ज्यादलस्यच १०४
३२८२।४३।१
वर्गंमान्यक्षतौहित्वामूलंतस्यचयद्भवेत् तत्को-
ज्या
टिमौर्विकारवण्डंज्ञेयंसर्वत्रपण्डितैः १०५ अ-
भुजे कोटिः कोटिः कोटि भुजकोटिः
न्योन्यंभुजकोटयोः स्याऽदन्यकोटिः स्वयंभुजः
५७।१७।४२
स्वस्वकोटिज्यकारवण्डंमान्येहित्वाशरोभवेत्
६ ६० खाग्नि ३० भुजांशज्या
१०६ वृत्तषष्ठांशचापज्याव्यासरवण्डोन्मिता
५७।१७।४२. ज्या ३ १२०
भवेत् तत्कोटिमौर्विकावृत्तत्र्यंशचापज्यकाभ-

वेत् १०७

## ज्यार्द्धानयनम्

बाणवर्गेतुतज्ज्यार्द्धवर्गंयुक्त्वाचतत्पदम् तद्दलं तद्धुजाऽर्द्धज्याखण्डंस्यान्मान्यबाणयोः १०८ घातार्द्धस्यपदंज्याऽर्द्धंज्ञेयंतद्बाहुखण्डजम् व्यासखण्डस्यवर्गाऽर्द्धमूलज्यार्द्धंसमंभवेत् १०९ दोः कोट्योर्वृत्तनागांशेष्टहत्कर्णदलोन्मिते दोर्ज्ययोरिष्टयोर्भेदखण्डवर्गेणसंयुतात् ११० तयोःकोटिज्ययोर्भेदखण्डवर्गाच्चयत्पदम् ज्याभवेद्भुजयोर्भेदखण्डस्याऽग्रज्यकाचसा १११

## मध्यमध्यज्यार्द्धानयनम्.

पृष्ठाऽग्रयोस्तुभुजयोस्तथाकोट्योर्निजेष्टयोः मध्येमध्येचमध्येचमध्येमध्येतयोस्तयोः ११२ इत्थं समानयेत्सर्वज्याऽर्द्धानिद्विगुणानिच

## अथ स्थूलगुणज्ञानम्

याज्याद्गुणाऽल्पकोष्ठानांसास्यात्स्थूलफलप्रदा ११३

## अथ भुजज्यातःकोटिज्यानयनम् तथा-
## कोटिज्यातःभुजज्यानयनम्

पट्टे बाहुज्यकांस्थाप्यसादोः पट्टज्यका भवेत् तत्स-
मीपादिकोष्टज्या पूर्वज्या परिकीर्त्तिता ११४ पूर्व-
ज्ययोनिताबाहुपट्टज्यागुणमुच्यते प्राग्ज्योत्था-
न्दोर्लवान्खांके ह्रित्वा कोटिलवाः स्मृताः ११५ ते-
षांस्थाप्यज्यकांपट्टे कोटिज्यासाऽभिधीयते को-
टिज्यायास्तु पूर्वज्यांकोटिज्यायांपरित्यजेत् ११६
सांशेषमौर्विकातेन गुणकेनैव ताडिता बाहुपट्ट
ज्यकायास्तु पूर्वाऽग्रज्यान्तरोद्धृता ११७ तल्लब्धे-
नोनिता कोटिज्या कोटिज्या स्फुटा भवेत् एवं
कोटिगुणोत्पन्नाबाहुज्याप्रस्फुटा भवेत् ११८ दो
र्ज्यया दोर्लवान्खांके ह्रित्वा कोटिलवाः स्मृताः
तेषाम्मौर्वीन्तु कोटिज्यातद्बाहुगुणजा भवेत् ११९

## अथ सूक्ष्मज्यानयनम्

प्राक्कोष्टमेककोष्टस्य शून्यंस्यात्तत्कलांवियत् पू-

वाऽग्रकोष्टयोर्ज्यैक्यं कोटिघ्नपरिभाजितम् व्येदा श्रां-
कांकगोनन्दगोष्ठैरुच्चज्यका भवेत् एवंसम्पूर्ण
कोष्टानामुच्चज्यानिसमानयेत् १२१ स्वस्वकोष्ट
द्वयोर्मध्येतूच्चाख्यांविन्यसेज्ज्यकाम् ततः को-
ष्टानिजीवायाः स्युर्द्विघ्नप्रमितानिच १२२ वाहुको
टयंशजंकोष्टं द्विघ्नंतत्कोष्टमुच्यते ततस्तत्कोष्टजा
जीवासूक्ष्मज्यासमुदीरिता १२३

## अथवृत्तान्तर्गतकोणानयनम्

ययोस्तयोस्तुविश्लेषभागाः कोणांशकाः स्मृताः
चक्रांशाः कोणभागास्ताः कोणसंख्याप्रकीर्त्तिता
१२४ स्युःकोणसंख्ययाभक्ताश्चक्रांशाश्चापभाग
काः चापार्द्धांशा भुजांशाः स्युस्तेषांज्यास्याद्भु
जज्यका १२५ बाहुज्यांशाहृतं वृत्तचक्रांशास्तंच
तत्फलम् वृत्तान्तः कोणबाहूनामेकैकस्यमिति-
र्भवेत् १२६ तद्वृत्तान्तः समाब्ध्यस्त्रेत्वेकदोस्स्या
न्महच्छ्रकः कोटिबाहुःस्वदांशानांवाचक्रज्याऽर्द्ध

पत्रकम् १२७ सम्विधायसुखाऽर्थन्तुज्याऽर्द्धमेव
फलंततः श्रानयेच्च पुनर्यत्रलब्धज्याऽर्द्धयमाहत-
म् १२८ कृत्वासामौर्विकाज्ञेयातस्या बाहुंशमान
येत् इत्युक्तंतत्रतल्लब्धंजीवाऽर्द्धम्मौर्विकेतिच १२९
संस्मृत्वाहिततोबुद्ध्यातज्जीवायास्तुंदोर्ल्लवैः तुल्या
जीवाऽर्द्धपत्रोत्था बाहुंशाःस्युर्गुणाऽर्द्धजाः १३०
तद्द्वाहुज्यकाखण्डात्कोटिज्याऽर्द्धंसमानयेत् स-
र्वत्रैवाऽन्त्यकोष्टस्यप्राक्कोष्टंस्यादुपाऽन्तिमम् १३१
कोष्टादुपान्तिमाज्ज्याऽर्द्धं स्वक्रव्यासदलात्त्यजेत्
स्युःक्रमादुत्क्रमज्याऽर्द्धपिण्डास्त्वेकादिकोष्टगाः
१३२ तैर्दोर्ज्यविच्छरंवाहुभागा नामानयेद्बुधः पू
र्ज्यास्त्रिज्यास्मृताज्याऽर्द्धंत्रन्यग्रंथेषुतु ज्यका १३३

श्रीलक्ष्मीवल्लभात्मजप्रेमवल्लभविरचितेपर-
मसिद्धान्तेजीवानयनाधिकारश्चतुर्थः ४

## अथ स्पष्टाधिकारः

केन्द्रोत्पत्तिः मध्योनोच्चंतुकेन्द्रःस्यात्स्वर्णमेषतु-
लादिकम् शीघ्रोच्चंनिजमध्योनं शीघ्रकेन्द्राऽभि-
धंभवेत् १ मन्दोच्चंनिजमध्योनं मन्दकेन्द्राभिधंभवेत्
विद्भृग्वोश्शीघ्रकेन्द्राख्यौसूर्यमध्यमसंयुतौ २ शीघ्रो-
च्चौस्तस्तयोश्चाऽथमन्दानांत्वऽर्कमध्यमम् शीघ्रो
च्चंस्याद्रवेर्वेगान्मन्दवेगंमृदुर्भवेत् ३ विद्भृग्वोर्भा-
स्करस्यैवमध्यमंमध्यमंभवेत् विद्भृग्वोर्निजमध्यं
तुशीघ्रोच्चंसमुदीरितम् ४ स्वस्वाद्यस्थानपर्य्य-
न्तंचक्रपूर्णस्थलाद्भवेत् यत्तत्सव्यान्तरंमन्दतुंगं[1*]
प्राक्सन्मुखंभवेत् ५ केन्द्रंस्यात्सव्यविश्लेषस्व-
स्वमध्यमतुंगयोः स्वमध्यात्स्वोच्चपर्य्यन्तमऽन्तरं
[2*]केन्द्रमुच्यते ६ चक्रपूर्णस्थलान्मन्दखेटानां

---

१* मन्दफलानयनेमन्दवृत्तयोः शीघ्रफलानयनेशीघ्रवृत्तयोरन्तरांशैर्गु-
णिताः भुजज्यांशाश्चक्रव्यासांशैराप्ताः लब्धं भागादिकंमन्दकर्मणिसर्वे
षां शीघ्रकर्म्मणि भौमज्ञशुक्राणांसमवृत्तेऋणं देयं शीघ्रकर्म्मणिगुरुसौ-
रयोः समवृत्ते धनं देयंस्पष्टवृत्तं भवति. *२ स्पष्टवृत्तांशाःषड्गुणाः
लब्धं वृत्तकलाः स्युः वृत्तकलाहृत केन्द्र भुजज्यांशार्द्धं बाहुफलकलाद्यंस्या-
त् वृत्तकलाहृतंकेन्द्रकोटचंशज्यार्द्धं कोटिफलकलाद्यंस्यात्

अंतर
तीक्ष्णदीधितेः मध्यान्तंसव्यविश्लेषयत्तच्छीघ्रो-
घु शु
च्चमुच्यते ७ चक्रपूर्णस्थलाद्वृत्तेयत्स्यात्तद्बुधस्युक्रयोः
स्वस्वमध्यमपर्य्यन्तंभेदंशीघ्रोच्चमुच्यते ८ स्वमध्या-
उच्च ६
त्तुंगपर्य्यन्तंचक्राऽर्द्धाऽल्पन्तुचेद्भवेत् तत्तुंगान्मध्यमं
अधिकं ध
यावच्चक्राऽर्द्धोर्द्धं भवेत्तदा ९ धनंमेषादिकेंद्रंस्या-
ऋणं अ नाशाः
त्तद्व्यस्तेऽस्वंतुलादिकम् राशोर्मार्गाशिका यद्वत्तद्व-
ग्रे भुजः प यू
त्खेचरदोःफलम् १० प्राक्पश्चान्मध्यमस्थानादऽ
ध ऋ मंदकेंद्रे शीघ्रकेंद्रे
न्तरंतद्धनर्णकम् व्यस्तंकेन्द्रद्वयेदेयंकेंद्रत्वाद्धण
य
कोत्तमैः ११ तौल्येबिम्बगुरुत्वेन खेटवायुबलादऽपि
य
खेटबिम्बंतदुच्चस्तुस्वल्पमेवाऽपकर्षति १२ शैथि
ल्यत्वेनतद्वायोर्बिम्बस्याऽल्पतयातथा तद्बिम्बमुच्च
संज्ञस्तुवेगाद्बह्वऽपकर्षति १३ भुजक्रमम्
भुजः ९० ४ ३ त्रिराशितः अधि ६
दोस्स्याच्चक्राघ्रितोऽल्पश्चेदूर्द्ध्वं चक्रार्द्धकेन्तरात्
२७० ९ राशितः अधिकः १२ ३६०
पादोनं चक्रतोर्द्ध्वश्चेच्चक्रेहित्वा भुजोभवेत् १४
भुज ९० ३ राशितः
कोटिक्रमम् बाहुचक्राऽघ्रितोहित्वातत्कोटिःस
३ राशि
मुदीरिता चक्रपदम् चक्रस्याऽघ्युन्मितंत्वेकप-

दमुक्तंविचक्षणैः १५ प्रथमंविषमंप्रोक्तं द्वितीयं
विषमं ३ ४
सममुच्यते ओजपदंतृतीयंस्याच्चतुर्थंतुसमंभवे-
त् १६

## अथचन्द्रसूर्ययोर्मन्दवृत्तांशाः

सू १४ चं
मन्दवृत्तांशका भानोर्वेशाकोऽइन्दोर्यमाग्नयः ३२ स-
समपदांते विषमपदान्ते सू १३।४० चं १३।४०
मान्तेऽथाऽसमान्तेतुखाब्धिलिप्तोनितास्तयोः १७

## अथ भौमादीनाम्मन्दपरध्यंशाः

मं बु बृ शु शं
पञ्चाग्न्वाः ७५ खाग्नयो ३० देवाः ३३ सूर्या १२ स्ता-
४९ समपदान्ते म बु
नमिताः कुजात् युग्मान्ते द्व्यद्रयः ७२ पिण्डा २८
बृ शु शं ४८ विषमपदान्ते
दन्ता ३२ ईशा ११ इभार्णवाः १८ ओजान्ते मन्द
वृत्तांशा विज्ञेयाश्चविचक्षणैः

## अथ भौमादीनांशीघ्रवृत्तांशाः

समपदांते मं २३५ बु १३३ बृ ७०
युग्मान्तेक्षगुणाक्षीणि देवा ज्ञा अम्बराद्रयः १९

| समेशीघ्र वृत्तांशाः | मं | बु | बृ | शु | शं | | | सू | चं | मं | बु | बृ | शु | शं | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | २३५ | १३३ | ७० | २६२ | ३९ | | | ०<br>२० | ०<br>२० | ३<br>० | २<br>० | १<br>० | १<br>० | १<br>० | |
| विषमपदे शीघ्रवृत्तांशाः | २३२ | १३२ | ७२ | २६० | ४० | | | मन्द<br>ऋ | वृत्त<br>ऋ | यो<br>ऋ | र<br>ऋ | न्त<br>ऋ | रां<br>ऋ | शाः<br>ऋ | |

| | सू | चं | मं | बु | वृ | शु | शं | | मं | बु | वृ | शु | शं |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| समपदे | १४ | ३२ | ७५ | ३० | ३३ | १२ | ४९ | | ३ ० | १ ० | २ ० | २ ० | १ ० |
| विषमपदे | १३ ५० | ३१ ४० | ७२ | २८ | ३२ | ११ | ४८ | | ऋ | ऋ | ध | ऋ | ध |

मन्दवृत्तांशाः विषमपदान्ते शीघ्रवृत्तयोरंतरांशा

(बु २६२ शं ३९ मं२३२ बृ १३२)

ध्वगनेत्राणिगोरामाप्योजेभौमाद्ददान्तकाः दन्ताब्धा

(वृ ७२ शु २६० श)

श्रब्ध गाः खागयुग्माः शून्यार्णवो४०न्मिताः २०

(शी)

द्राग्वृत्तांशाः स्मृताः स्पष्टवृत्तांशानयनम्.

(विषम सम)

श्रोजयुग्मयोः स्वपदोक्तयोः वृत्तयोरन्तरांऽशाघ्ना·

(*१ ५७।१७।४२)

दोर्ज्याऽर्द्धांशास्तु भाजिताः २१ चक्रव्यासाऽर्द्धभा-

(विषमपद वृत्तात समपदवृत्ते)

गैस्तु वृत्तभागफलंभवेत् श्रोजवृत्तात्समे वृत्तेही-

(अधिके ध ऋ)

नोर्द्धेस्वर्णकंचतम् २२ दत्वासमाभिधेस्वस्ववृ-

(ज्यार्द्ध)

त्तेवृत्तःस्फुटोभवेत् यत्कर्म्मयज्ज्यकाखण्डे कृत्वा-

---

*१ चक्रव्यासपलाः ४१२५२४ चक्रार्द्धव्यासपलाः २०६२६२ पूज्यांश ५७।१७।४२ भक्ताः भुजज्यार्द्ध भागाः स्वस्वौज समवृत्तयोर न्तरांशैर्गुणिताः लब्धं भागादिकं समपदे श्रोजादल्पे समपदे धनं श्रो-जादधिके समपदे ऋणं दत्वा स्पष्टवृत्तं भागादिकं स्यात् भुजज्यार्द्धां शाः वा कोटिज्यार्द्धांशाः ६० षष्टिभक्ताः ज्यार्द्धांशाः शून्य भागादिकाः स्युः ते षड्गुणिता वृत्तस्फुटांशाघ्नाः भुजफलं कोटिफलं च भागादिकं स्यात्.

चक्रदल ६ व्यासांशाः ५७।१७।४२ ५७।१७।४२ कथितं
चक्रदलस्यच २३ विस्तारेणैव भागन्तुदेयंयत्रमतं
फलमानयित्वा
खलु फलंतत्रानयित्वैवपूज्यासज्याऽर्द्धपत्रजम्
तत्कर्म्मप्रोक्तवत्कृत्वातत्प्रोक्तफलवद्भवेत्. २४

## अथसूर्य्यादिशन्यन्तानाम्मन्दफलानयनम्

७२०
भुजफलानयनं * कोटिज्यामन्दकेंद्रस्यभक्ताशून्याश्वि
गुणिता
पर्वतैः २६ अभ्यस्तामन्दवृत्तस्यस्पष्टांशैःकोटि-
जंभवेत्. **मन्दकोट्यानयनम्** स्वर्णतंकोटिजंद-
५७। १७ ।४२ १०ध ४ कृ
त्वाचक्रांशव्यासखण्डके २७ नक्रकर्कादिकेमन्द-
केन्द्रेतत्कोटिरुच्यते **मन्दकर्णानयनम्** मान्द-
भुज वर्ग
दोःफलवर्गंतुयुक्त्वाकोटिकृतिंत्विह २८ तन्मूलंस-
११४।३५।२४
न्दकर्णःस्या **मान्दफलानयनम्** स्वचक्रव्यासलवा
भु
हताः मान्दबाहुफलस्यांशाःमन्दकर्णांशकोद्धृताः
भु
२९ ज्यास्यात्तस्यास्तुदोर्भागाः फलंमान्दंस्फुटंभवेत्
अयमेवफलंदानयोग्यंमान्दमुदीरितम् ३०

## अथ व्यवहारोचितंमन्दफलानयनम्.

मन्दकेन्द्रभुजज्याऽर्द्धमन्दवृत्तस्फुटांशकैः निघ्नं

* मंदकेन्द्रस्यदोर्ज्यांशाःस्वाश्विसप्तांशकोद्धृताः २५ मन्दवृत्तस्फुटांशघ्ना मान्दबाहुफलंभवेत् **कोटिफलानयनम्**—+

चक्रदलांशासंलब्धंदोर्ज्यालिवादिका ३१ स्यात्त-
स्या दोर्लिवा मान्दंफलंस्याद्व्यावहारिकम्
सूर्यचन्द्रयोः स्पष्टानयनम्. सूर्येन्द्वोर्दोःफ-
लंमादमध्येदत्वास्फुटोभवेत्. ३२

## अथ भौमादीनांशीघ्रकर्णानयनम्

भुजफलम्. शीघ्रकेन्द्रभुजज्याऽर्द्धशीघ्रवृत्त-
स्फुटांशकैः निघ्नचक्रांशकैराप्तंशीघ्रबाहुफलम्भ-
वेत्३३ कोटिफलानयनम्. द्राक्केन्द्रात्कोटि
जीवाऽर्द्धद्राग्वृत्तस्यस्फुटांशकैः निघ्नंचक्रैलवैरा-
सं शैघ्रंकोटिफलंभवेत् ३४ स्फुटवृत्तांशतर्कांशनि-
घ्नाकेन्द्रस्यदोर्ज्यका कोटिज्याऽप्यंशकाद्यासास्या
द्व्यासातत्कलाफलम् ३५ कोटयानयनम्
शैघ्रंकोटिफलंदेयंधनंकेन्द्रेमृगादिके कर्कादिके च
र्णमंशादौचक्रव्यासदलेभवेत् ३६ कोटिःकोटिरु.
तौवर्गौशैघ्रबाहुफलस्यच युक्त्वातस्यपदंशीघ्रक-
र्णमुक्तंलवादिकम् ३७

## अथ भौमादीनांशीघ्रफलानयनम्

चक्रव्यासलवाऽभ्यस्ताः शैघ्रबाहुफलांशकाः
शीघ्रंकर्णांशिकैर्भक्ता लब्धंज्यास्याल्लवादिका ३८
तस्या बाहुलवाः शैघ्रंफलंस्यात्प्रस्फुटोचितम्
शैघ्रंदानोचितंचान्यफलंसूक्ष्मंप्रकीर्त्तितम् ३९

## अथ भौमादीनांप्रस्फुटीकरणम्

पूर्वंद्राक्केन्द्रतः शैघ्रंव्यस्तंस्वर्णंदलफलम् केन्द्रेम-
न्दाभिधेदत्वासंस्कृतंतत्प्रकीर्त्तितम् ४० संस्कृ-
तान्मन्दकेन्द्रात्तुप्राग्वन्मान्दाभिधंफलम् आनयि-
त्वाचतत्स्वर्णंव्यस्तमेवदलंसदा ४१ संस्कृतेम-
(सूक्ष्ममन्दकेन्द्रः स्यात्)
न्दकेन्द्रेतुदत्वागणितकोविदैः मन्दाख्यस्फुटकेन्द्रः
स्यात्तज्जंमान्दाभिधंफलम् ४२ स्वर्णंयथोचितं

---

* चक्रांश ३६० भक्ताः स्वस्वस्पष्टमन्दशीघ्रवृत्तांशाः स्वस्वमन्द-शीघ्रकेंद्रभुजज्यांशार्द्ध घ्नाः स्वस्वमन्दकेन्द्रजंमान्दं तथा स्वस्वशीघ्रकेंद्रजंशैघ्रं भुजफलंस्यात् तज्ज्यार्द्धजातिकम् अथतथा स्वांगाग्नि ३६० भागभक्ताः स्वस्वस्पष्टमन्दशीघ्रवृत्तांशाः स्वस्वमंदशीघ्रकेंद्रजभुजस्थानजकोटिज्यार्द्धांशघ्नाः स्वस्वमन्दकेंद्रजं मान्दं तथास्वस्वशीघ्रकेंद्र शैघ्रज्यार्द्धजातिकं भागादिकं कोटिफलंस्यात्

मध्येदत्वामन्दस्फुटोभवेत् व्यस्तमान्दफलंदत्वा
द्राक्केन्द्रे तत्स्फुटो भवेत् ४३ तद्राक्केन्द्रस्फुटा-
त्प्राग्वत्स्वर्णं शैघ्राभिधंफलं दत्वामन्दस्फुटेह्येत-
ज्जायते रवेचरस्फुट: ४४

## अथव्यावहारिकस्पष्टवेगानयनम्.

मन्दकेन्द्रस्यदो: कोष्ठज्याभेदार्द्धकलाहतम् मध्य-
मन्दोच्चयोर्वेगविश्लेषांशकपूर्वकम् ४५ मन्दकेन्द्र
स्यदो: कोष्टाभेदलिप्तोद्धृतं फलम् भागाद्यं स्फुट-
वृत्तांशानिघ्नं चक्रलवोद्धृतम् ४६ स्वर्णंतत्कर्क-
नक्रादि मन्दकेन्द्रेंशकादिकम् दत्वामध्यगतौमन्द
वेगंस्याद्व्यावहारिकम् ४७ मन्दस्पष्टजवांहि-
त्वाच्छीघ्रतुंगजवेस्फुटं शीघ्रकेन्द्रजवंभौमपूर्वा-
णांसमुदीरितम् ४८ मन्दस्पष्टजवांशोनशीघ्र

---

१* मूज्यांशाः ५७।१७।४२ पलाः २०/२० ६२/६२ ६२/६२ पिण्डं स्वमन्दकर्णं स्वशीघ्रकर्णभागपलानिपिण्डेन भक्त्वा लब्धांशादिभि: स्ववाहु फलम् मन्दंतथास्ववाहुफलं शैघ्रं भागादिकं हत्वा स्वस्व बाहुज्यार्द्धांशाःस्युः तथातज्जंचापार्द्धफलं स्पष्टोचितं भुजफलम् स्वर्णं मेषतुलादि केंद्रजं स्यात्.

गत्यंशाः ५७।१७।४२ अंतरेणै
तुंगजवाङ्गकाः पूज्यद्राक्स्फुटकर्णाशविश्लेषेणै-
गुणिताः शी धृ अं
वताडिताः ४९ स्फुटद्राक्कर्णभागाप्ताःस्वर्णमंशादिकं
५७।१७।४२ त्री कर्णां
फलं तत्पूज्याद्धिकाऽल्येतु स्फुटद्राक्क्रमणाभिधे
गतिः अं
५० मन्दस्पष्टगतौदत्वास्यात्तद्वेगःस्फुटोयदि तद्दे-
अंतरात्
ऐद्व्यधिके तर्हि भेदाद्वक्रगतिर्भवेत् ५१

## अथस्पष्टपत्रनिर्माणरीतिः

सू
यावद्भास्करमन्दोच्चंपलान्तंसुस्थिरं भवेत् तावदेका
३६५।१५।३१।३१।२४ मिश्र सू
ऽब्दधस्त्राणालकाराव्यर्द्धकालिकान् ५२ भास्कर
स्पष्टान् राश्या घ भुक्ति सू
स्यस्फुटा न्राशिपूर्वकांस्तुकलादिकान् सूर्यस्पष्टज-
वान्पत्रे लिखित्वातुततोबुधैः ५३ मिश्रकाले ष्टयो-
अंतर घ वेग
र्भेद लिसघ्नंतु स्फुटंजवम् लिप्ताद्यंतद्दिनोत्पन्नंपत्रो-
६०
स्थंखरसोद्धृतम् ५४ लिप्ताद्यंतद्दिनोत्पन्नेपत्रोस्थे
सू घ
मिश्रकालिके भास्करस्यस्फुटेदत्वास्वेष्टे मिश्राऽधि
अं सू
काऽल्पके ५५ स्वर्णंतत्स्वेष्टकालेतुभास्करस्यस्फु-
टंभवेत् योगस्याऽपितिथेश्चैवपञ्चांगानयनायच
चं सू
५६ चंद्रस्यस्फुटकालेतु भास्करस्फुटमानयेत्

दिनगणे चं चंद्रोच्च
कस्मिंश्चि द्युगणेस्वेष्टेचन्द्रमध्यविधूच्चयोः ५७
अंतरां चं चं उं जवांतरांशैः दिता
भेदांशास्तुतयोर्वेगभेदांशै र्भाजिताः फलं घस्रा-
चंद्रमध्यमस्येष्ट दिनस्याहर्गणादौ चंमध्याच्चंद्रोच्चे चं
द्यंचंद्रमध्येष्टाऽह्नो घादावऽधिकाऽल्पके ५८ ग्लौ-
दिनगणं
तुङ्गे स्वर्णकं दत्वातुल्यकृद्युगणं भवेत् तुल्यकृद्यु-
अहर्गणे चं उ चं
गणेतुल्यौस्तश्चन्द्रोच्चेन्दुमध्यमौ ५९ तस्मादऽग्रे
एकपीठस्य २७।३३।१६।३३।३९।४१।४५
चपृष्ठेचतुल्यौतौकेवलस्यच पीठस्य दिवसादीना
मध्य दि-घ-प-विप-प्रप- इत्यादि ॥
मन्तरेतु दिनादिकाः ६० ज्ञेयाः पर्णदिनाद्यास्तैर्नि
चं १२
मेके दिनोद्भवं चन्द्रमध्यजवं राशिपूर्वकं चक्रशेषित
१
म् ६१ ज्ञेयंमध्यफलंराशिपूर्वंपर्णदिनादिभिः ए-
चं जवं चंद्र अंतरं
काऽह्नोद्भवयोरिन्दोर्मध्यवेगोच्चवेगयोः ६२ भेदरा-
१२
श्यादिकंहत्वाततस्तच्चक्रैतस्त्यजेत् स्याद्राशिपू-
चं स्यात्
र्वकंतद्ग्लौकेन्द्रंपर्णदिनादिषु ६३ तत्केन्द्रजंफलं
१४ ७ क चं
स्वर्णमिजज्याकादिजंविधोः दत्वाभागादिकंत्वंऽशका-
दि-घ-प- च
दौमध्यफलस्यच ६४ तत्पर्णदिनपूर्वेषुप्रस्फुटंतद्वि
धोः फलम् राश्याद्यंजायतेतत्तत्कोष्टजंचाऽनुपातज
चं-स्पष्ट-
म् ६५ तत्केन्द्रंत्वेकभागाढ्य मग्रकेन्द्रमुदीरितम्

तत्केन्द्रोत्थाऽग्रकेन्द्रोत्थफलविश्लेषलिप्तकैः ६६ इ-
न्दोरेकदिनोत्पन्नमध्यवेगोच्चवेगयोः भेदं भागमुखं हृत्वा-
तल्लिप्ताद्यं धनर्णकम् ६७ कर्कनक्रादिकेन्द्रोत्थमिन्दो
रेकदिनस्य च मध्यवेगकलादौ तु दत्त्वाऽस्या द्वीजकस्फुटः
६८ भेदं भगणयोः कृत्वा चन्द्रचन्द्रोच्चयोः सदा जाय-
ते भेदहारस्तु भेदहारविभाजिताः ६९ शीतगोर्भगणा
अर्कनिघ्ना राश्यादिकं फलम् चक्रतष्टं तु तत्सूक्ष्मम-
वपर्णध्रुवं भवेत् ७० चंद्रोच्चभगणेभ्यश्च तद्वत्पर्णध्रु-
वं भवेत् वा सूक्ष्मैरेकपीठस्य घस्राद्यैर्मध्यमजवं ७१
राश्याद्यं तु विधोः सूक्ष्मं हत्वा तच्चक्रशेषितम् स्यात्प-
र्णध्रुवकं तद्वच्चंद्रोच्चे काऽहर्जजवम् ७२ राश्याद्यं
पीठघस्राद्यैर्हत्वा पर्णध्रुवं भवेत् चंद्रस्य भगणाः किंवा
चंद्रोच्चभगणास्तथा ७३ अर्कघ्नाः पीठनिघ्नाश्च भेद
हारोद्धृताः फलं राश्याद्यं चक्रतष्टं तु तत्स्याद्ध्रुवकं भ-
वेत् ७४ पर्णध्रुवाहतं पीठं राश्याद्यं चक्रशेषितम् प-
र्णाऽहारम्भकस्थाने स्यात्सद्यध्रुवकं तथा ७५ कल्हा

५७२६५१३३ २७।३३।१६।३३।३४।४१।४५ ३६० चं.
भेदहरेणाप्ताः पीठघस्रादिकं भवेत् चक्रांशाश्च-
चं.उ. १३।३।५३।५३ इत्यादिकैः भक्ताः
द्रचंद्रोच्चसूक्ष्मवेगांतरांशकैः ७६ उद्धृतास्तत्फ-
२७।३३।१८।३३।३४।४१।४५ ३६० ५७२६५१३३
लंवास्यात्पीठवासरपूर्वकम् चक्रांशगुणितभेदहा
१५७७९१७८२८ चं दि.अं.१३।३।५३।५३ इत्या.
रंभूदिनभाजितं ७७ चंद्रस्यैकांऽह्निजभागपूर्वकं-
वेगं चं जवांतर अ१३।३।५३।५३ इत्या.
न्द्रजवं भवेत् इन्दोर्मध्योच्चयोर्वेगभेदं केंद्रजवं भवेत्
५७२६५१३३ दि. १५७७९१५८२८
७८ भेदहारगुणाइष्टघस्रा भूवासरोद्धृताः तन्नि
रंऽग्रंफलंपीठंजायते ह्यथसूक्ष्मकैः ७९ एकपीठस्य
२७।३३।१६।३३।३४।४१।४५ दि.
घस्राद्यैर्भाजिताइष्टवासराः लब्धतत्रनिरंऽग्रंतु पी-
६०
ठंवाजायतेतथा ८० तच्छेषंभाज्यभागःस्यात्षष्ट्या-
तद्भाज्यभागकम् भक्त्वाभाज्यांशवंशान्तपर्वावृ-
त्तिभिरेवंच ८१ लब्धंपर्णदिनाद्यंस्यादऽथवापीठता
२७।३३।१६।३३।३४।४१।४५
डितम् एकपीठस्यघस्राद्यसूक्ष्मसिद्धदिनेषुच ८२
दि.घ.प. १५७७९१७८२८
हित्वापर्णदिनाद्यंस्यात् पीठघ्नाः कुदिनास्तथा भेद-
५७२६५१३३ दि.घ.प.
हारोद्धृतास्तत्रघस्रपूर्वफलंतथा ८३ हित्वाहीष्ट
दि.घ.प. दिनगणादिनस्य
दिनेष्वेवपर्णघस्रादिकंभवेत् तुल्यकद्युगणाह्न
काल- चं. चं.
स्यतुल्यकृत्समयोद्भवौ ८४ विधुमध्यमचन्द्रोच्चौ

राश्याद्यौ क्षेपकौस्मृतौ क्षेपयोस्तत्तयोरेके क्षेपंसद्य
ध्रुवाऽन्वितम् ८५ कृत्वापर्णदिनारम्भकालेचंद्रस्फु-
टंभवेत् तत्तत्पर्णाह्नि पूर्वोत्थिराश्याद्यंग्लौफलंस्फुट-
म् ८६ युक्त्वापर्ण दिनारम्भकालिकेतद्विधुस्फुटे
लंकायाइष्टकालेतु स्याद्राश्याद्यंविधुस्फुटम् ८७
तत्रतत्पर्णघस्राद्यैर्लब्धकोष्टजवंस्फुटम् ज्ञेयंचंद्र
जवंतद्ग्लौस्फुटलिप्तास्तुभाजिताः ८८ खाभ्राष्टैःस्या
त्फलंयातभंतल्लंकेष्टकालिकम् शेषंखाभ्राष्टविश्ले
षंखांगघ्नंग्लौजवस्यच८९ लिप्तासंवर्त्तमानर्क्षगम्य
लिप्तादिकंभवेत् इष्टकालेतुलंकायास्तद्दिनाऽर्कि-
चरबुधैः९० स्वर्णंलिप्तादिकंस्वर्णंदत्वादेशांतरंतथा
लिप्ताद्यंस्वर्णकंदत्वाप्राक्पश्चात्तन्निजस्थले ९१
स्वेष्टंसूर्योदयाज्ज्ञेयंतद्दिनेतद्विधुस्फुटं तत्स्वेष्टेस्व
स्थलेज्ञेयंलंकादेशेष्टजंखलु ९२ स्वेष्टेस्वर्णंचरंव्य-
स्तंप्राक्पश्चाद्देशभेदकम् दत्वाऋणधनंलंकादेशेष्टं
सर्वदामतम् ९३ अत्रोदाहरणार्थन्तु तुल्यरुद्युग-

काल.
एंतया तुल्यकृत्समयक्षेपंराशिपूर्वंचकथ्यते ९४
सू. १५७ घ-२१३७
लंकासूर्योदयादूर्ध्वंससासेन्दुमितैःपलैः तुल्येष्वेव
द्विगुणे ८७७५
र्त्तमानाऽह्न्वन्देक्षाम्बागनागकैः ९५ सम्मितैःसम-
चं. चन्द्र. क्षे रा. १ अं. २२ १
कृत्कालंचंद्रमध्येन्दुतुंगयोः एकभश्रुतिभागास्तु
ध ११ प. ४४
भूबाणाश्वकलाः पलाः ९६ वेदवेदमिताःप्रोक्ता
९०० +
अत्रक्षेपस्यपिण्डितैः पीठंखाभ्रनवांसन्नंजायते
पुनः
चेत्तदामुहुः ९७ साधयेत्तुल्यकृत्कालंक्षेपंराश्यादि-
दिनगुणम्
कंतया तुल्यकृद्वर्त्तमानाऽह्नवृंदमेव ततस्ततः ९८
पी. दिना. दि. २७ घ. ३३ प. १६।३३।३४।४१।४५
समाश्विप्रमिता देवास्तर्काब्जाश्चमरोन्मिताः घ
स्राद्याश्चततोवेदरामाश्चन्द्रयुगोन्मिताः ९९ एवमे-
१
वैकपीठस्यजायन्ते सर्वदाखंडु पर्णध्रुवांशकाद्याः
अ ३।४।८।४८।५।२६।१८।२८।५७।४४।७।४४
स्युरऽग्नयः सागरोन्मिताः १०० नागाश्चाष्टार्णवाश्च-
क्षाःषट्पक्षाश्चाष्टरूपकाः पिण्डाःसप्तशराश्चाब्धि
सागराएवमेवच १०१

भौमादीनांस्पष्टपत्रनिर्माणयुक्तिः
मं.बु.बृ.शु.श.
स्पष्टानाम्भौमपूर्वाणांसाधनायसुखेनच पत्राणां

विस्तारं
रचनाऽर्थंतुग्रन्थोयात्येवविस्तृतिं १०२ अतएवधि-
मं बु इ गु शं
याधीरैः कृत्वाचस्पष्टपत्रकान् भौमज्ञेज्यसितार्की
णांपत्रेभ्यः साधयेत्स्फुटान् १०३

## मार्गवक्रफलपत्रनिर्माणयुक्तिः

मा॰ व दिन घ॰ प॰
तन्मार्गारम्भतोवक्रारम्भान्तं दिवसादिकम् स्या-
स्यावक्रारंभात् दिनादि.
दऽग्रंस्यात्ततोमार्गकालान्तं पृष्ठसंज्ञकम् १०४ पृष्ठे
प्रत्यऽह्नजान्स्पष्टानऽग्रेप्रत्यऽह्नजांस्तथा कृत्वालंके
मा॰
ष्टकालेतुमार्गारम्भेष्टजं स्फुटम् १०५ अग्रजेप्रस्फु-
व
टेह्रित्वातत्तन्मार्गफलं भवेत् वक्रारम्भेष्टजेहित्वाप्र-
स्फुटेपृष्ठजंस्फुटम् १०६ तत्तद्वक्रफलंतत्स्यात्क-
पत्रे
स्मिंश्चित्समयेदले लिखित्वाऽथनिजेष्टाऽब्दभू-
वर्षादौ
वेंऽग्रंदक्षमीरितम् १०७ पृष्ठंवामंमतं वक्रारम्भे-
ग्र मा ग्र
ष्टोत्थेग्रहस्फुटे तन्मार्गारम्भकालोत्थं हित्वातत्खे-
चरस्फुटम् १०८ अधिकस्वाऽभिधंतत्स्यात्न्मार्गा-
ग्र स्पष्टं क्र॰स्पष्टे क्र
रम्भेष्टजंग्रहम् हित्वातद्वक्रवेशेष्टजेखेटेह्यऽधिक
स्यात् अनंतरं
क्षयम् १०९ जायतेस्वेष्टवर्षादौमार्गारम्भेष्टतःपरम्

वक्रारम्भेष्टतश्चाऽपिस्वेष्टान्तंयद्दिनादिकम् ११०
तद्भवेद्गुणकं हत्वातद्गुणेनाऽग्रसंज्ञकम् भक्त्वा
तद्दक्षघस्राद्यैस्तत्पत्राऽह्लादिकं भवेत् १११ तत्प-
त्राऽह्लादिकोष्टोत्थंमागरिव्यंपत्रजंफलम्. दक्षका-
लाऽन्तजेनैव हत्वाचाऽधिधनेनच ११२ तत्त्वेवाऽ
धिधनेनैवत्वऽग्रकालान्तजेनहि भक्त्वातत्रफ-
लंयुक्त्वादक्षारम्भेष्टजेग्रहे ११३ तत्सामान्यस
मीपंतुस्याल्लंकेष्टे ग्रहस्फुटम् पृष्ठंगुणगुणंवाम-
घस्राद्यैर्भाजितंफलम् ११४ जायतेपत्रघस्राद्यं
तत्पत्राह्लादिकोष्टजम् पत्रजंतुफलवक्र संज्ञकंयदग्र-
जायते ११५ तेनवामाऽन्तकालोत्थं हत्वा तदऽधि
कक्षयम् पृष्ठकालाऽन्तजेनैवभक्त्वाचाऽधिक्ष-
येनतु ११६ लब्धंवामप्रवेशेष्टजेखेटेखलुवर्जित
म् कृत्वातन्तद्ग्रहस्यैवसामान्यासन्नकं स्फुटम्
११७ जायतेचाऽथ तल्लंकादेशेष्टे लिप्तिकादिके त-
द्दिनाऽर्कंचरंस्वर्णंस्वर्णंदत्वाकलादिकम् ११८

ध. ऋ. ध. ऋ
दत्वादेशाऽन्तरं स्वर्णं प्राक् पश्चाद्देशजं तथा लंके-
सृ. अनंतरं
ष्टेतद्भवेत्स्वेष्टं स्वस्थानाऽर्कोदयात्परम् ११९

तथास्पष्टवेगसाधनम्. फलयोरऽन्तरं भुक्ति
दि. घ. फ.
स्तत्तत्कोष्टाऽग्रकोष्टयोः पत्राऽह्वादिजयोस्स्वस्व
मार्गवक्रगयोर्भवेत् १२० अस्तोदयसाधनम्.
जी
स्थूलाऽस्तोदयसांनिध्ये साध्य द्राक् स्पष्टकेन्द्रकम्
ऋ
ततोऽस्तंचोदयं तस्य साधयेच्च यथोचितम् १२१ व-
३ प बु
क्रात्स्थूलैरग्निदिनैर्यात्यऽस्तं पश्चिमे बुधः ततः प्रागु
सू. उद. १६ ३० पू.
दयं भूपैर्मार्गात्त्वत्रिदिनैस्तथा १२२ पूर्वेऽस्तंचत-
३२ प २३ दि. स्थू. १०
तोदन्तैः पश्चिमेचोदयंतथा शुक्रोरामान्तकैः खा-
२२५ ७८ प
ब्धैः पंचपक्षकरोन्मितैः १२३ नागाश्वैश्चाऽथ भूपुत्रो
१२१
यात्यऽस्तादुदयं दिनैः चन्द्रार्कैर्मार्गतश्चाऽस्तं पंच
२५५ व ३१ १२९
गोकरसम्मितैः १२४ जीवः कृग्निमितैरंकसूर्यैः सौ
रां ३६ १०२ स्थूलैः
रस्तुषड्गुणैः अम्य भेन्दुभिरस्पष्टैस्तत्र तत्र ततस्तथा
व २३
१२५ वक्रात्स्थूलमार्गदिनज्ञानम्. वक्रतश्चि
व. मार्ग ५५ शु. मार्ग ६९ भौ. मार्ग
करैर्ज्ञस्य शुक्रस्याशुगमार्गणैः भौमस्याऽकरसै

जीवस्यकुभूचंद्रसम्मितैः १२६ सौरस्याऽगाग्निभू-
तुल्यैः स्थूलाऽह्नैः सरलं भवेत् भौमस्याब्धिनृपाः
प्रोक्ता वक्रांशाः सरलांशकाः १२७ षट्तानास्त्वा
शुकेन्द्रस्यवक्रांशैः परिवर्जिताः मार्गांशाः कुजम-
ध्याशुकेन्द्रवेगांशांशकोद्भृताः १२८ स्युर्वक्रारम्भं-
तोमार्गवेशान्तंस्थूलवासराः ज्ञस्यवक्रांशकाश्च-
ब्धिशक्रा मार्गलिवास्तथा १२९ तर्कभूयमलाःप्रो-
क्ता वक्रांशैस्सरलांशकाः हीनास्तज्ञस्यमध्याशु
केन्द्रवेगांशभाजिताः १३० स्थूलाऽह्ना मार्गवेशा-
न्तांस्युर्वक्रारम्भतःखलु एवंतयोस्तयो भेदभागाः
स्वस्वाशुकेन्द्रयोः १३१ मध्यद्राक्केन्द्रवेगांशभक्ताः
स्युःस्थूलवासराः मध्येतयोस्तयोर्भौमपूर्वाणांस्वस्व
योस्सदा १३२

भौ॰ ०।२८ शीघ्रकेंद्रोपरिपूर्वोदयं ५।१४ वक्रं ६।१६ मार्गं ११।२ पश्चिमास्तं गु॰ ०।१४ पूर्वोदयं ४।१० वक्रं ७।२० मार्गं ११।१६ पश्चिमास्तं शं॰ ०।१७ पूर्वोदयं ३।२५ वक्रं ८।५ मार्गं ११।१३ पश्चिमास्तं. बु॰ ६।२५ पूर्वोदयं ७।६ मार्गं १०।१० पूर्वास्तं ११।२० पश्चिमोदयः ४।२४ वक्रं ५।५ पश्चिमास्तं शु॰ ६।३ पूर्वोदयम् ६।१७ मार्गं ११।६ पूर्वास्तं ०।२४ पश्चिमोदयम् ५।१३ वक्रम् ५।२७ पश्चिमास्तम्.

## चलसंक्रमानयनम्.

अर्कस्य स्फुटगत्यंशैराप्ताः स्वर्णायनांशकाः लब्धं वा-
रादिकस्वर्णं व्यस्तं दत्वादिनादिके १४८ स्वस्वसंक्रा-
न्तिकालानामङ्जभाद्भास्करस्यच चलसंक्रमका-
लाः स्युश्चलसंक्रमकालतः १४९ स्थिरसंक्रमकाला
न्तमृर्णगाः स्युः पयांशकाः मेषार्कात्प्राक् समाऽह्न
चेत्पूर्वमार्गांशकाः स्मृताः १५० अग्रमेषार्कतस्तु-
ल्य धस्त्रंपृष्ठपयांशकाः एवंजूकार्कतः पूर्वपश्चान्मा-
र्गलवाः स्मृताः १५१.

## अथ सूर्यादिग्रहाणां नक्षत्रानयनम्

खखवनागोन्हृताः खेटलिप्ता यातभमुच्यते तच्छे-
षयातसंज्ञः स्यात्तद्यातेनैववर्जितम् १५२ खा-
भ्राष्टंभोग्यसंज्ञः स्यात्खेटवेगकलोद्धृतौ यातैष्यौ
स्तस्तुयातैष्यौ खेटभस्यदिनादिकौ १५३

## अथ तिथ्यानयनम्

व्यऽर्केन्दोरंशकाअर्कैर्भक्ता यातातिथिर्भवेत् शे-

षंयातमिनाड्विलास्या द्भोग्यगतभोग्ययोः १५४
लिप्ताश्चेन्द्वर्कयोर्वेगविश्लेषांशैर्विभाजिताः याते-
ष्यास्तु कलाः स्वेष्टाद्वर्त्तमानतिथेर्मताः १५५
नक्षत्रानयनम्. इन्दोः कलाः खखवाष्टासा ल-
ब्धंतद्गतं भं भवेत् शेषं गतं खखवाष्टभ्यस्त्यक्त्वा
स्याद्भोग्यसंज्ञकः १५६ याते ष्याविन्दुवेगांशैर्भ-
क्तौ याते ष्यलिप्तिकाः भस्येष्टात्स्युस्तिथेस्तुल्या-
योगानयनम् स्वर्द्दत्तसेन्द्वर्कलिप्तिकाः १५७ खवा-
श्चाष्टैर्विहृता यातयोगशेषं गतं भवेत् यातात्खवा-
भ्रगजादूनाद्भोग्यंस्याद्विहृताविमौ १५८ चन्द्रा-
र्कजवयोगांशैः स्युर्यातैष्यकला युतेः स्वेष्टात्तद्व
र्त्तमानस्य हित्वा यातकलादिकम् १५९ पूर्वस्यै-
ष्यकलाद्यस्यादादेयातैष्य दक्षणात्
स्पष्टपञ्चाङ्गानयनम् कृत्वातिथिभयोगाना
मन्तेचन्द्रार्कयोः स्फुटौ १६० ताभ्यां पूर्वोक्तव-
त्तेषां स्युर्यातैष्यकलाः स्फुटाः

अथस्वेष्टाद्यक्षेष्टानयनम् तथास्वदेश-
पञ्चांगाद्यक्षपंचांगानयनम्.

स्वेष्टेवातिथिपूर्वाणांलिप्तिकादौधनर्णकम् १६१
व्यस्तंसूर्य्यचरंदत्वास्वव्यक्षेतिभवन्तिहि खेटम-
ध्यादिकंतुल्यंस्यात्स्वव्यक्षस्वदेशयोः १६२ । ९५३

श्रीलक्ष्मीवल्लभात्मजप्रेमवल्लभविरचि-
तेपरमसिद्धान्तेखेटस्पष्टाधिकारःपंचमः५

---

अथ स्पष्टोत्पत्तिः

मेषमीनादिकंपश्चात्पूर्वंमेषवृषादिकम् ज्ञेयंतुला-
दिकंपश्चात्संज्ञकंतद्दृणंभवेत् १ जायतेऽङ्गादि
कंपूर्वंसर्वत्रधनसंज्ञकम् उच्चात्षड्भयुतादूर्द्ध्वम-
ध्यमंपूर्वसन्मुखम् २ तुंगात्षड्भान्वितादऽल्पंम-
ध्यंपश्चिमसन्मुखम् आकर्षत्येवतुङ्गाख्यवायुः
स्वाऽभिमुखंखलु ३ खेटानांनीचमध्योच्चक-
क्षाःस्वस्वसमीरिताः तन्नीचकुण्डलंस्वऽल्पंभू-

मेरोसन्नमीरितम् ४ तथातद्भूमितोदूरंविज्ञेयं
कक्षयो
स्वोच्चकुण्डलं नीचोच्चपथयोर्व्यासभागयोगार्द्ध
कक्षयो व्यासः
सम्मितैः ५ भागकैःपथयोर्मध्ये विस्तारसंमुदीरि-
व्यासोर्द्ध मन्दशीघ्रवृत्त
तम् तद्विस्तारोर्द्धवंचस्ववृत्तभागादिकं भवेत् ६
जलस्य
नद्यादिचलतोयस्यकल्लोलंबलसंयुतम् कदाचिच्च
ग्र
कदाचिच्चनिर्बलंतुयथाभवेत् ७ तथातत्रखेटबि-
म्बाढ्यवायोरुच्चाह्वयस्यच कल्लोलजनितंवृत्तंनी
कक्षा
चोच्चपथमध्यगम् ८ विज्ञेयंपृथिवीगर्भाच्चक्रव्या-
५७।१७।५२ क्रा पथकक्षा.
सदलांशकैः तुल्यांशैःक्रान्तिमार्गेतुतन्मध्यकुण्डल
ग्र ग्र
भवेत् ९ खेटमध्यस्थलेमध्यकुण्डलेतत्रखगस्यतु
मन्दवृत्तस्यकेन्द्रंतुविज्ञेयंगणकोत्तमैः १० स्वस्व-
१५६२५ ४९०८८
वृत्तांशकैर्निघ्नास्तत्वषड्विवसोन्मिताः नागाष्टाभ्रां
मंदशीघ्र मंदशीघ्रोच्च ६
कवेदासाःस्वस्वव्यासांशकाःस्मृताः ११ स्वोच्चषड्भा
३
न्वितंकृत्वानीचराश्यादिकं भवेत् स्वोच्चंतत्त्रिभयुक्तो
नमूर्द्धोऽधःके तुरुच्यते १२ ऊर्द्धोऽधःकेतुतुल्येऽ-
अल्प ग्र
न्तमध्येसर्वोऽधिकोनकम् खेटमन्दस्फुटंज्ञेयंस्न्ये

मध्यमे मंदस्फुटं
शीघ्रंफलेखलु १३ स्वोच्चनीचोन्मितेमध्येमध्यतुल्यं
मार्गाणां, ३६०
स्फुटंभवेत् मध्यनीचोच्चकक्षाणांस्युश्चक्रांशाःसमां
शकाः १४ वृत्तादऽधिपदोक्तात्तुन्यूनंन्यूनपदोदिता-
अंतर ५७।१७।४३
त् चाऽधिकं वृत्तयोर्भेदःस्याज्ज्याऽर्द्धेपूज्यसम्मिते
५७।१७।४२ भु
१५ पूज्येवृत्तांतरंचेत्स्याद्वाहुशज्यादलेतदा वृत्त
ध क्र समवृत्तात विषमवृत्तात सम
भागफलंस्वर्णंतुल्यादोजेऽधिकोनके १६ दत्वात्तुल्य
ध क्र
पदोक्ते तु वृत्ते स्वर्णं विचक्षणैः वृत्तभागफलं स्वत्तं प्र-
५७।१७।४२ मध्यम मध्यकक्षाकुंडले
स्फुटंतत्प्रकीर्त्तितम् १७ चक्रव्यासदलमध्यस्थां-
नकोटिरुदीरिता केन्द्रकोटिज्यकाखण्डंतच्चक्रज्या
३६० कोटिज्यार्द्ध
दलंभवेत् १८ चक्रेचक्रज्यकार्द्धेचे वृत्ते कोटिफलं
मध्यम ग्र १०
भवेत् मध्यस्थानोर्द्धगेखेटे केन्द्रं नक्रादिकं भवेत्
ग्र गतिः ध
१९ तत्रखेटजवस्वऽल्पंज्ञेयंकोटिफलंधनम् केन्द्रं
४ मध्यमस्थानात् ग्र क्र
कर्कादिकंमध्यदेशाधःस्थेखगेभवेत् २० तत्रएवंजा-
वेगं ग्र
यते कोटिफलंस्यादऽधिकंजवम् वृत्तमस्तकगेखे
१२ ग्र
टेकेन्द्रंमीनान्तकंभवेत् २१ वृत्तवामाऽर्द्धगेखेटे
३ ग्र
युग्मान्तंकेन्द्रकं भवेत् वृत्तस्याऽधोगतेखेटेकेन्द्रंक-

स्यान्तकं भवेत् २२ वृत्तदक्षार्द्धगे खेटे स्यात्केन्द्रं
कार्मुकान्तकम् तद्वृत्तकेन्द्रतोधःस्थे खेटे कोटि-
फलं क्षयम् २३ तद्वृत्तकेन्द्रतश्चोर्द्ध्वसंस्थे कोटि-
फलं धनम् दत्वापूज्याऽभिधे खेट कोटिःपट्टस्थि-
ताभवेत् २४ मध्यमस्थानतोमध्य कुण्डलेतूभयत्र
च खाकांशैस्सम्मितस्थानेलक्षणंच समाचरेत् २५
भूगर्भस्पर्शकं सूत्रं लक्षणद्वयसंस्थितम् खेटमध्य
समुद्भूतं पट्टमत्र समीरितम् २६ केन्द्रदोर्ज्यादलं
ज्ञेयंचक्रज्याऽर्द्धं विचक्षणैः चेच्चक्रे स्याज्ज्यकाखंडं
वृत्ते बाहुफलं भवेत् २७ खेटकोटिकृतोर्युक्त्वा वर्ग
बाहुफलस्यच तन्मूलं खेटकर्णः स्यात्तद्वाह्वऽग्रकु
गर्भयोः २८ मध्यगस्या त्वगस्थाने तद्वाह्वऽग्रं प्रजा-
यते बाहुमूलं तु ताला ऽग्रेज्ञातमत्र प्रजायते २९
कर्णमूलं तु भूगर्भे कर्णाऽग्रं स्याद्ग्रहस्थले यत् खेट
मध्यदिग्यातं सूत्रं भूगर्भतो भवेत् ३० तत्सूत्रे पृथि
वीगर्भात्सदृशाकारसद्दशाम् खेटकोटिसमंताल

ग्र ग्र
विज्ञेयंपण्डितोत्तमैः ३१ भूगर्भग्रहयोर्मध्यसूत्रंखे-
कर्ण ग्र
टश्चैवभवेत् भूगर्भाद्ग्रहदिक्सूत्रःप्रस्पृशत्येवयत्र
च ३२ मध्यकुण्डलकंतत्रप्रस्फुटस्थानमुच्यते प्र-
५।१७।४२
स्फुटस्थानभूगर्भमध्यंपूज्योन्मितंभवेत् ३३ अग्र
७ तुलादि क्र
गंप्रस्फुटस्थानान्मध्यंचेत्स्याहणंफलम् ५ पृष्ठगं
१ मेषादि ग्र
प्रस्फुटस्थानान्मध्यंतद्धनंभवेत् ३४ चेत्खेटग्र-
कर्ण भु ५।७।१७।४२
वणेबाहुफलंपूज्येज्यकादलम् ज्याऽर्द्धं द्विघ्नंभवे
ज्जीवातस्या बाहुलवाःफलम् ३५ मध्यस्थानस्फु-
ध
टस्थानंभेदंस्यात्तत्स्फुटोचितम् तंतत्केन्द्रवशात्स्व-
क्र
र्णमध्येदत्वाभवेत्स्फुटम् ३६ केवलंतत्सकेन्मान्द
चं सू ध क्र
फलंचन्द्रार्कयोःस्वकं स्वर्णंयथोचितंमध्येदत्वा
मन्द मध्यम
तत्स्यान्मृदुस्फुटः ३७ मध्यः स्वमन्दलोकेतु भ्रम-
म शीघ्र
त्येवयथातथा भ्रमत्यत्र मृदुस्पष्टोनिजसत्वरमण्ड-
ग्र
ले ३८ यथास्वमध्यमस्थानात्कल्लोलः खलुखेचरम्
मंदोच्चाभिधवायोस्तु मन्दकर्णस्य मस्तके ३९ प्रक्षि
ग्र मंद
पत्येवशीघ्रोच्चवायुकल्लोलकस्तथा खेचरंतन्मृदु

सूत्र
स्पष्टस्थानसूत्रपथस्थितात् ४० मन्दकर्णशिरो
कर्ण शी
देशाच्छीघ्रश्रवणमस्तके प्रेरयत्यवनीगर्भाद्वा कर्णो
मध्यकुण्डलम् ४१ प्रस्पृशत्येवयत्रैवस्यात्तत्रप्र-
स्फुटस्थलम् प्राप्यतेमन्दकर्णोऽग्राद्यद्भावोमध्यम-
प्राप्यते + शीघ्र
स्थले ४२ तद्भावः प्राप्यतेचाशुकर्णोऽग्रात्तत्स्फुट
स्थलम् उत्पत्तिस्तु यथाप्रोक्तामध्यमन्दस्फुटाऽन्त
मंद
रे ४३ विज्ञेयाहितयाधीरैर्मृदुस्पष्टस्फुटाऽन्तरे
तत्रशीघ्रस्फुटंज्ञेयमुत्पत्त्यर्थंग्रहस्फुटम् ४४ न-
स्मरेद्भ्रमतस्तत्रशीघ्रकेन्द्रस्फुटं स्फुटम् तच्छीघ्र
फलसंस्कारहीनान्मध्यग्रहाच्चयत् ४५ साध्य-
तेहिफलंमान्दंतत्सूक्ष्मंचनजायते अतः शीघ्र-
ध मं
फलाऽर्द्धस्यसंस्कारंनिजमध्यमे ४६ स्वर्णंयथो-
चितंदत्वासंस्कृतंमध्यमं भवेत् संस्कृतमध्यमंहि-
त्वानिजमन्दोच्चसंज्ञके ४७ संस्कृतंमन्दकेन्द्राख्यं
जायतेहिततः फलम् मान्दंसमानयित्वाऽर्द्धं दत्वा
ध. मं तर्मीह्यद्विवारसंस्कृतमध्यमेमन्दोच्च
स्वर्णंयथोचितम् ४८ मध्यमेसंस्कृतेतच्च मन्दो

च्चेपरिवर्ज्जितम् कृत्वातन्मन्दकेन्द्रस्तुजायतेच्चाऽ
धिसंस्कृतः ४९ तज्जमन्दफलपूर्वमध्यमेतुधनर्णं
कं दत्वायथोचितंज्ञेयं भौमादीनाम्मृदुस्फुटम् ५०
मन्दस्फुटोनशीघ्रोच्चंशीघ्रकेन्द्रस्फुटं भवेत् शोध्य
मुच्चंतुविज्ञेयं शोधकंचाऽत्रमध्यमम् ५१ शुद्धके-
न्द्राऽभिधंज्ञेयंशोधकेतद्धनर्णकम् दत्तंतद्विपरीतं
तुंशुद्धे ज्ञेयंविचक्षणैः ५२ शीघ्रकेन्द्रस्फुटोत्सन्नं
फलंस्वर्णंयथोचितम् दत्वामन्दस्फुटेतत्स्याद्भौ
मादीनांनिजस्फुटम् ५३

## अथस्पष्टवेगोत्पत्तिः

एकभागोनयुक्ताच्चकेन्द्राद्यत्तत्फलाऽन्तरम् ल-
भ्यतेचेत्तदास्वोच्चवेगमध्यमवेगयोः ५४ विश्लेषा
लुभ्यतेस्वस्वतंत्तद्वेगफलस्फुटम् स्वर्णंयथोचितं
दत्वातद्वेगेस्याज्जवःस्फुटः ५५ यतस्तन्मन्दवृत्ता
धःसांस्थितः खेचरो भवेत् चक्रेकर्कादिकेमन्दकेन्द्रे
नक्रादिकेतथा ५६ खेचरोमन्दवृत्तोर्द्धभागसंस्थः

प्रजायते मन्दोत्थंमध्यवेगेतुकेन्द्रेककीदिकेधनम्
५७ देयंभुक्तिफलंमध्यवेगेनकीदिकेऋणम् तंद
त्वामन्दवेगः स्यान्मन्दवेगविवर्जितम् ५८ तच्छी
घ्रोच्चजवंशीघ्रकेन्द्रवेगमुदीरितम् तद्भवेन्मन्दवे-
गासुतुंगवेगाऽन्तरोन्मितम् ५९ मेषादिचलकेन्द्रा
त्तुरूपांशाढ्यान्चयत्फलम् तत्केन्द्रफलतोऽध्यस्य
स्वर्णस्यान्तत्फलाऽन्तरम् ६० एवंजूकादिकेशी
घ्रकेन्द्रे स्वर्णं विपर्य्ययम् ज्ञेयंवेगफलंतंचदत्वाम-
स्वष्टमन्दगतौ
न्दजवेतुतम् ६१ स्वर्णयथोचितंभौमपूर्वाणांप्र-
१ दिनान्तरोत्थस्वस्वस्पष्टोन्तर तुल्य
स्फुटंजवम् तद्भवेद्भू१ द्युभेदोत्थस्वस्वस्पष्टांतरो
न्मितम् ६२ मन्दवेगाऽधिकंवेगफलंचेत्स्याद्दृणं
स्पष्टमंदजवं हित्वावक्रवेगस्यात्
तदा हित्वाभुक्तिफलेमंदवेगंवक्रजवंभवेत् ६३
शून्यवेगज्ञानम् मार्गप्रारम्भकालेतुवक्रारम्भ-
क्षणेतथा शून्यंस्पष्टजवंभौमपूर्वाणांसमुदीरित
म् ६४ अथरवेटबाणोपपत्तिः
चं २७० मं ९० बु १२० वृ ६० शु १२० शं १२० मध्याग्नर कलाः
धिष्ण्यगोकोगसूर्याकितुल्या दिग्गुणिताः कलाः वि-

ज्ञेयाश्चन्द्रपूर्वाणाम्बाणानांपण्डितोत्तमैः ६५
सौम्यदैत्येज्ययोर्मध्यशीघ्रकेंद्रसमन्वितम् कृ-
त्वामन्दस्फुटंज्ञेयंस्वस्वमन्दस्फुटंतयोः ६६ मा-
र्गणानयनेकिन्तुसौम्यदैत्येज्ययोस्तयोः स्वस्व
पातविहीनाच्चस्वस्वमन्दस्फुटात्तया ६७ तत्सौ-
म्यदक्षिणारंभमध्यशीघ्रकेन्द्रसम्मितात् स्वस्वमा-
र्गणयोःपूर्वंजायतेबुधशुक्रयोः ६८ मध्यमन्दस्फु-
टस्पष्टाश्चक्रेस्युःपूर्वसम्मुखाः इन्दुभौमज्ञपूर्वाणां
स्युःपाताःपरसन्मुखाः ६९ भेददोर्ज्यातुदोर्ज्या
स्यादेकदिक्सन्मुखाख्ययोः भेदाद्दोर्ज्यातुकोटिज्या
भिन्नदिक्सन्मुखाख्ययोः ७० मन्दस्पष्टसमेपाते
बाणंशून्यंमितंभवेत् अतस्तत्पातहीनाच्चतन्म-
न्दस्पष्टखेचरात् ७१ दोर्जीवाऽर्द्धगुणास्वोक्तबा-
णलिप्तास्तुभाजिताः प्रस्फुटेनांशुकर्णेनबाणलि-
प्तादिकंभवेत् ७२ मन्दस्पष्टखगात्पातवर्जिता
द्दक्षिणोत्तरम् जूकमेषादिकान्तन्तुषष्ट्यासंस्या

लवादिकम् ७३ तत्पातोनान्मृदुस्पष्टाद्दोर्ज्यको-
टिज्यका भवेत् सा चक्रव्यासरूपास्याद् एतस्याः
स्पृहा भवेत् ७४ पातो मृदुस्फुटात्षड्भसंयुताद् अधि
कोन्तरे खेचरं प्रेरयत्य ऽल्पश्चेत्पातो दक्षिणे खग
म् ७५ चालयत्युत्तरे याम्ये मध्यमाऽपक्रमस्थः
लात् उद्वृत्ताकारकः पातवायुश्चन्द्रादिखेचरम् ७६
ऊर्द्ध्वस्थानोत्तरस्थानाऽधोयाम्योऽर्द्ध्वस्थलक्रमात्
स्वस्वपाताऽभिधोवायुर्भ्रमत्येवग्रहोपरि ७७ म-
न्दकर्णोक्तपूर्वोणास्थूलपूज्योन्मितं भवेत् इन्दोः
शीघ्रश्रवा भावाद्राक्कर्णः स्यान्मृदुश्रवः ७८ स्व
स्वोक्तेषुकलाऽभ्यस्तास्वस्पृहाद्राक्श्रवोद्धृता-
स्वस्वबाणकला ज्ञेयाः षष्ट्यासाः स्युः कला ल-
वाः ७९ स्वोक्तेषुकलिकाः शीघ्रकर्णव्यासदलेय-
द्वा लभ्यन्तेहि स्पृहासंज्ञेतद्बाणकलिकास्तदा
८० स्वस्पृहागुणितादिन्दोः प्रोक्तमार्गेणलिप्तिकाः
पूज्यासाः शरलिप्तास्तुहीन्दोः स्युर्व्याविद्धारिकाः ८१

ज्यार्द्धांशाः २

लब्धबाणांशका बाणमौर्व्यर्द्धांशा उदीरिताः द्विघ्ना-

भु बाणांशाः

स्तेज्यांशकास्तेषांबाह्वंशाः स्युःशरांशकाः ८२।१०३५

श्रीलक्ष्मीवल्लभात्मजप्रेमवल्लभविरचितेपर-

मसिद्धान्तेखेटस्पष्टोत्पत्त्यधिकारःषष्ठः६

---

## अथ मन्दशीघ्रकर्णानयनम्.

भु ५७।१७।४२

दानयोग्यफलांशानांदोर्ज्याऽर्द्धं पूज्यताडितम् भक्त्वा

भु मंदकर्णोवाशीघ्रकर्णःस्यात्

तत्स्वस्वकेन्द्रोत्थदोः फलेनश्रव भवेत् १

## अथ सूर्य्येन्दु भौमादीनांसर्वकर्णाधिका-

## ल्पमन्दकर्णज्ञानम् तथाभौमादीनांसर्व-

## कर्णाधिकाल्पशीघ्रकर्णज्ञानम्.

५७।१७।४२ सम ३६०

हत्वापूज्यांशकैस्स्वस्वयुग्मवृत्तांशकान्भजेत् चक्रां-

ध ऋ ५७।१७।४२

शैस्तत्फलंभागपूर्वकंतुधनाऽधनम् २ दत्वातत्पू-

धिकाऽल्प

ज्यभागादौसर्वाऽध्यल्पश्रवौस्मृतौ चन्द्रस्यसर्वा

चं

धीषुहरानयनम्. औषधीशस्यवृत्तेनमन्दाख्ये

५७।१७।४२ ३६१

नसमेनच३ हत्वातत्पूज्यकंभक्त्वाचक्रांशैस्तत्फ

लोनितम् पूज्यंतच्छीतगोः कृत्वासर्वाऽधीषुहृ-
रोन्यते ४. सर्वाऽल्पमन्दकर्णन्तुतद्विधोःसमुदी-
रितम् भौमज्ञादिकानांसर्वाधीषुहरानयनं
भौमविद्गुरुशुक्रार्किखेटानामांशुवृत्तकम् ५
युग्मारव्यपूज्यकाऽभ्यस्तंचक्रांद्रौभंजितंफलम्
हित्वा तत्पूज्यकेतेषां पूर्णाऽध्यःक्षहरोन्यते ६ त-
द्भौमज्ञेज्यपूर्वाणां सर्वाऽल्पाशुश्रवोच्यते.

चंद्रभौमादीनांमध्येषुकलानामंकानि
भानिरवेटाश्चसूर्याश्चितर्काः सूर्याश्च भास्कराः ७
दिग्घ्राश्चन्द्रकुजादीनाम्मध्यबाणकलाःस्मृताः
सर्वाधिबाणानयनम्. स्वस्वमध्येषुलिप्ताःपू-
ज्यांशास्तुविभाजिताः ८ सर्वाऽध्यःक्षहरांशैस्तुलि-
प्ताद्यंतत्फलंभवेत् षष्ट्यांसंतत्फलंचक्रभागज्या-
व्यासजातिकम् ९ भागाद्यंचन्द्रपूर्वाणांस्यात्तत्स
र्वाऽधिमार्गणम्. चन्द्रार्ककर्णज्ञानम्
ज्ञेयाविन्द्वर्कयोर्मन्दकर्णौचन्द्रार्कयोः श्रवौ १०

तयोःस्थूलकर्णज्ञानम्. चन्द्रभास्करयोःक-
र्णौस्थूलौपूज्योन्मितौस्मृतौ व्यगुचन्द्रगोलदिगुत्प-
त्तिः राहुः पूर्वाऽर्द्धचक्रस्थोयाम्यायामऽपकर्षति
११ चन्द्रात्षड्भोर्द्धसंस्थस्तुह्युत्तरस्यान्तुतद्विधुम्
अतस्तद्व्यऽगुचन्द्रस्यषड्भाभ्यन्तरगस्यच १२ गो-
लमुत्तरंदिक्कंतुतत्षड्भोर्द्धगतस्यच व्यगुचन्द्रस्यगोलं
तुज्ञेयंदक्षिणादिग्गतम् १३ भौमादीनांशरदिज्ज्ञा-
नम्. स्वम्चमन्दस्फुटंस्वस्वपातस्यष्टविवर्जितम्
कृत्वा भौमज्ञपूर्वाणांतत्षड्भाभ्यन्तरंयदा १४ तद्बा
णसुत्तरंतर्हिजायतेगभेतोऽधिकंचक्रान्त्यदित्तर्हि
तद्बाणंदक्षिणंभवेत् १५  चन्द्रशरानयनम्
व्यऽगुशीतांशुदोर्भागज्यांघ्र्यंशाश्चांकताडिताः
चन्द्रमन्दश्रवांशासाभ्रासमंशादिकंशरम् १६ त-
द्विपातेन्दुदिक्कंस्याच्चक्रांशाव्यासगोत्रगम्
व्यवहारयोग्येन्दुशरानयनम्. व्यग्विन्दोर्बाहु
मौर्व्यऽर्द्धमंकघ्नत्रिज्ययोद्धृतम् १७ लब्धमंशा-

दिकज्ञेयंतद्विपातेन्दुगोलगम् सौम्यदक्षिणकंचन्द्र
बाणतद्व्यावहारिकम् १८ अंशानामंगुलकरणं
भागाःशून्यकराभ्यस्ताः स्युःसर्वत्रांगुलानिहि खा-
श्विघ्नाश्चन्द्रबाणांशाइन्दोरिष्वगुलाःस्मृताः १९
अंगुलंनखगेहःस्यादंशंभागलंवं भवेत्
लग्नक्रियोः शारज्ञानम्. राशीनां भास्करस्या-
पिनित्यंशून्यंशरं भवेत् २० भौमादीनांपातही-
नमन्दस्पष्टज्ञानम्. द्राकेन्द्रस्फुटजंशीघ्रमन्दा
नांस्वर्णकंफलम् स्वर्णंदत्वास्फुटेपातेतत्पातोन
स्फुटभवेत् २१. मन्दानांस्पष्टपातोनमन्दस्पष्टस-
मंखलु शुबु व्यस्तमान्दमृदुस्पष्टकेन्द्रात्थशीघ्रयोः
फलम् २२ स्वर्णंपातेस्फुटेदत्वाशीघ्रोच्चतेनवर्जि-
तम् कृत्वातत्स्यात्स्पष्टपातहीनमन्दस्फुटोन्मितम्
२३ अथभौमादीनांशारानयनम्.
शीघ्रकेन्द्रस्फुटाज्जातमांशुकर्णस्फुटं भवेत् सूर्य-
मध्योनितंयत्स्याच्छीघ्रोच्चंबुधशुक्रयोः २४ तेनो

नितंतयोः पातप्रस्फुटंचस्फुटं भवेत् मन्दस्फुटंस्व-
पातोनंकृत्वाऽक्षांशासमालिखेत् २५ तद्बाहुज्यां
शकाःस्याश्रुकर्णांशाप्ताः फलम्भवेत् तत्फलंविलि-
तार्कीणांस्याऽक्षभागसुखम्भवेत् २६ स्वाग्र्यूनंत
त्फलंभौमबाणमंऽशादिकं भवेत् जीवाःक्षंस्वफ-
लस्याऽर्द्धभागपूर्वमुदीरितम् २७

बाणांगुलानयनम् बाणांशाः खान्तकैर्निघ्ना
अंगुलाद्यंशरंभवेत् बाणांगुलास्त्रिभिर्निघ्ना विज्ञे-
या बाणलिप्तिकाः २८ क्रान्तिज्यांगुलानयनं
खाश्विघ्नास्तोटकांशास्तुतोटकस्यांऽगुलाः स्मृताः
चक्रांगुलानयनम् शून्यनेत्राहृताश्चक्रभागाश्च
क्रांगुलाः स्मृताः २९ शरकुलज्ञानम्, चन्द्र
भौमादिबाणांशाः स्युर्व्यासज्याकुलोद्भवाः तेद्विघ्नाः
स्वेषुमौर्व्यंशास्स्युस्तेषांतु भुजांशकाः ३० स्युर्दत्त-
भुजवंशोत्थास्तेषामेवहि संस्कृतिम् दत्वामध्याऽ
पमेस्वस्वाऽपक्रमंप्रस्फुटं भवेत् ३१

## अथ स्वस्वाध्यपक्रमानयनम्

शर २ भु
सर्वाऽध्यऽक्षांशका द्विघ्नौ ज्यास्यान्तस्यास्तुदोर्ल्लि-
शर
वाः सर्वाऽध्यऽक्षलवा ज्ञेयाः प्रस्फुटाः पण्डितोत्त-
क्रां शर क्रां
मैः ३२ पूर्णाऽपक्रमयुक्सर्वाऽधीणुःस्वाऽध्यऽप-
मंभवेत् **अथक्रान्तिकर्णपल मानज्ञानम्**
१* व्या ८३८९४
क्रान्तेः कर्णपलाश्चाब्धिगोष्टाभ्यष्टोन्मिताः स्मृताः
३३ **गोलज्ञानम्** सौम्यगोलंतुमेषादौयाम्यगो-
लंतुलादिके सौम्यदक्षिणदिग्ज्ञानेसर्वत्रैवसमीरि-
तम् ३४

## अथक्रान्त्यानयनम्.

अयनांशैः भु
मागांशैस्संस्कृतंखेटंकृत्वागोलंसमालिखेत् तद्दो-
८८५१
र्ज्याऽर्द्धपलाः क्षनागनागविभाजिताः ३५ शूलं
व्यासानुपातजम्
भागादिकंतत्स्यात्किं वाकर्णाऽनुपातजम् शूलां-
२
शाः द्विगुणंकृत्वाचक्रज्यांशाः प्रकीर्त्तिताः ३६
भु क्रां
तेभ्योत्था भुजभागास्तुज्ञेया मध्याऽपमांशकाः
**स्पष्टक्रान्तिसाधनम्.** स्वस्फुटेष्वंशाकैश्चस्वम-

---

*१ क्रांतिकर्णव्यासपला ८३ ८९४ क्रांतिकर्णांशाः २३।१८।१४

क्रा क्रां
ध्यमाऽपक्रमांशकाः ३७ संस्कृताःस्यात्स्फुटक्रान्तिः
रवेटस्याखिलकर्म्मणि अथाश्विन्यादीनांनित्यां-
८ २१ २८
शज्ञानम्. अ अष्टौ भ भूम्यन्तका कृ अष्टरामा रो
४९ ६३ आ ६६ ९२
अंकाब्धयस्तथा ३८ मृ रामागाः षड्साः पु रामरवे-
ति १०६ १०८ म १२९
टाः षट्खेन्द्वोदिताः अ अष्टखा श्लाश्वगोसूर्य्याः
पू १२७ उफ १५५ ह १७० चि १८३
समेन्द्राः शरवासराः ३९ खाम्बुदाश्च नलाष्टाब्धा.
स्वा १९९. वि २१२ अं २२४ ज्ये २२९
गोकाब्धा भास्करान्तकाः सिंधुयुग्मकराअंकजा-
मू २४१ पूषा २५४ उ.षा २६०
तयो भूयुगान्तकाः ४० सागराक्षान्तकाः शून्यषट्प-
अभिजि २६५ श्रव २७८ ध २९० श ३१०
क्षाअष्टषट्कराः अष्टमान्यअगोपक्षाः शून्यपक्षगु-
पू.भा. ३२० उ.भा. ३३७ रे०
णास्तथा ४१ षड्न्तान्यऽश्वदेवानिचाऽम्बरः क्रम
अ स्यष्टानां
शोदिताः साभिजिद्दस्नपूर्वाणांनित्यानांप्रस्फुटांश-
अ प्रनि लुब्धक
काः ४२ नित्या दस्नादयः सर्वेसाऽगस्त्यव्याधपू-
र्वकाः स्युस्तेषांप्रस्फुटांशास्तुनित्यांशाः समुदीरिताः
४३. अथाश्विन्यादीनांनित्यशरांशज्यांशानि.
अ ५६९ भ ६५८ कृ २४५ रो २५५
गोगाक्षाअष्टपोतकाःपो सिद्धाः शरपोकराः
मृ ५७० आ ६२५ पु ३२१ ति०
खाम्धाक्षाःशरदन्तकाः भूदन्ता अम्बरक्रमात् ४४

| नक्षत्र | नित्याः राश्याद्यः | शरज्या भागाः | शरभुज भागाः | दिक् |
|---|---|---|---|---|
| अ | ० ८ | ९ २९ | ९ ३१ ३९ | अ |
| भ | ० २१ | १० ५८ | ११ २ ६ | उ |
| कृ | १ ८ | ४ ५ | ४ ५ १३ | उ |
| रो | १ १९ | ४ १५ | ४ १५ १५ | द |
| मृ | २ ३ | ९ ३० | ९ ३२ ४० | द |
| आ | २ ६ | १० २५ | १० २८ ३२ | द |
| पु | ३ ३ | ५ २१ | ५ २१ २८ | उ |
| ति | ३ १६ | ० ० | ० ० ० | उ |
| अ | ३ १८ | ६ ३३ | ६ ३३ ५३ | द |
| म | ४ ९ | ० ० | ० ० ० | उ |
| पू | ४ २७ | १० ४१ | १० ४४ ४७ | उ |
| उ | ५ ५ | ११ ४१ | ११ ४५ ५४ | उ |
| ह | ५ २० | १० ४३ | १० ४६ ५० | द |
| चि | ६ ३ | १ ४० | १ ४० १ | द |
| स्वा | ६ १९ | ३४ २९ | ३७ ० ११ | उ |
| वि | ७ २ | १ ११ | १ ११ १ | द |
| अनु | ७ १४ | १ ३२ | १ ३२ १ | द |
| ज्ये | ७ १९ | ३ ८ | ३ ८ ७ | द |
| मू | ८ १ | ७ ३४ | ७ ३५ २१ | द |
| पू | ८ १४ | ४ ४६ | ४ ४६ ११ | द |
| उ | ८ २० | ४ २८ | ४ २८ १८ | द |
| अ | ८ २५ | ५० ३५ | ६१ ५९ २२ | उ |
| श्र | ९ ८ | २८ ३९ | ३० ० १० | उ |
| धं | ९ २० | ३३ ४० | ३५ ५९ १४ | उ |
| श | १० २० | ० २० | ० २० ० | द |
| पू | १० २६ | ३३ ३१ | २४ १४ ० | उ |
| उ | ११ ७ | २४ ५७ | २५ ४८ ५४ | उ |
| रे | ० ० | ० ० | ० ० ० | उ |

अ. ३९३ भ० पू
अकानलाश्वशून्यश्वक्र-
६४ उ७०१ ह
ब्ध्यगाः कुरवपर्वताः श्र्ये-
६४३ चि ९०० स्वा
ब्ध्यगाः खखचन्द्राश्वगो-
२०६९ वि ७१
षट्खाश्विमिताः क्रगाः ४५
अ ८२ ज्ये १८८ मू
युग्माकाउरगाष्टाञ्जाश्र-
४५४ पू
ब्धिभूतार्णवोन्मिताः ष-
२८६ उ २६८
ट्पिण्डाश्वषट् पक्षाः
श्रभि ३०३५
पञ्चाग्न्यभ्रहुताशनाः ४६
श्र १०१९ ध
गोचन्द्राचलरूपाणिरवा-
२०२० श २०
श्विखाक्षीणिखान्तकाः
पू १४११ उ १४९१ रे ०
ईशेन्द्राश्वगगोशाकाः शू-
शर
न्यंचाऽक्षकलाः स्मृताः ४७
न. २८
ऋक्षाणांगजयुग्मानाद
अ.
स्रादीनांयथाक्रमम्
अ
दक्षिणशरम्. मैत्रज्ये-
ज्ये श्र हमृ शा वि
ष्ठाहिहस्तेन्दुपाशीनांद्वी

शमूलयोः ४८ शिवतोयभवेश्वानांकमत्वाष्टभ-
योस्तथा स्याद्वाणदक्षिणम् उत्तरशारम्
शेषभानांसौम्यशरं भवेत् ४९

अथाऽगस्त्यादीनांताराणांनित्यांशाः शार-
भागाश्च. अगस्त्यस्य. याम्याःशरकलाःप्रो-
क्ता अब्धिवेदाग्निपावकाः नित्यांशाश्चाद्रिशैलाश्च
कुम्भोत्थस्यमुनेस्तथा ५० लुब्धकस्य. नित्यांशाः
षड्जा याम्याः ससरामाःशरांशकाः लुब्धकस्यादि
ताश्चाऽथ हुतभुक् नित्यांशाश्चकरास्युगाः ५१ वाणां
शाश्चद्वयः सौम्याअग्नेरुक्ताश्च पण्डितैः ब्रह्महृ-
दयस्य. नित्यांशा द्विशराः सौम्यबाणांशाश्चक
पाणयः ५२ स्युर्ब्रह्महृदयस्याऽथ नित्यांशाः सप्त
मार्गणाः प्रोक्ताः प्रजापतेः सौम्यबाणांशाः पञ्चव-
ह्नयः ५३ अपांवत्सस्य. अपांवत्सस्यनित्यां
शास्त्र्यष्टाङ्काश्चशरस्यच लिप्तास्तुशून्य पञ्चा
ब्धैः सम्मिता उत्तराः स्मृताः ५४ आपाख्यस्य

| | आप | आपां | हुत | प्रजा | ब्रह्म | लु | मु |
|---|---|---|---|---|---|---|---|
| शरस्फुटभागाः | ७ ३१ १९ उ | २ ३० ३ उ | ७ १ ४ उ | ३७ ३१ १० उ | ३० २४ २९ उ | ४० १२ २९ द | ७६ ३५ ३४ द |
| शरज्यांशाः | ७ ३० उ | २ ३० उ | ७ ० उ | ३५ ० उ | २९ ० उ | ३७ ० द | ५५ ४४ द |
| नित्यांशाद्यपादयः | ६ ३ | ६ ३ | १ २२ | १ २७ | १ २२ | २ २६ | २ २७ |

नित्यांशा आपसंज्ञस्यत्र्यष्टा
१८३ शरज्यार्द्ध कलाः ४५०
आश्वकलाऽइषोः शून्यबाणाः
उ
एवाः सौम्याश्चङ्गोयाः पाण्डितो
शरांशा
न्तमैः ५५ स्वेष्वशाश्चज्यकाऽ
२
ङ्गांशाः स्युर्द्विघ्रास्तेभवेज्ज्यका
भ
तस्या बाह्वशकाः सूक्ष्माश्चङ्गे-
याः स्वशरांशकाः ५६ स्वस्व-
पू
स्पष्टशरज्याऽर्द्धं स्वस्वपूर्वश-
रंभवेत् निजपूर्वशरंग्राह्यं बुद्ध्वा
शर
तज्ज्येषुकर्म्मणि ५७ सर्वत्रस्व
शर. शर
स्फुटाऽक्षतुग्राह्यंचापेषुकर्म्म-
णि अगस्त्यस्य कुम्भोत्थस्य
द
सुनेर्याम्याः प्रस्फुटाख्यशरस्य
पला
च ५८ जायन्तेविकला अब्धि
२०५७३४
वह्न्यद्रद्वक्षाग्रपाणयः

## अथदस्रादिरेवत्यन्तानांसाभिजिद्दक्षाणांप्रयोजनिकताराज्ञानम्-

फाल्गुन्योर्भाद्रपदयोर्द्वयोराषाढयोस्तथा ५९ सौ-
म्यद्वयधिपदस्राणांयोगतारोत्तराभवेत् हस्तर्क्षस्याऽ
क्षेताराणांनैर्ऋत्यांसन्नपश्चिमे ६० यातारासंस्थि-
तातस्यास्सौम्येयापश्चिमाश्रिता सातारायोगता
रातुहस्तभस्यसमीरिता ६१ पश्चिमास्याच्छ्रविष्ठा
या मध्यमातिष्यभस्यच ज्येष्ठाकर्णाऽनुराधानां
मध्यमासमुदीरिता ६२ रेवत्यन्तकवह्नीनांपित्र्यभ-
स्याऽपिदक्षिणा ब्राह्माऽदित्यऽहिमूलानांस्यात्प्राची
योगतारका ६३ शेषाणांम्महतीतारा योगतारा
प्रकीर्त्तिता. अथाश्विन्यादिऋक्षाणांतारासंख्या.
वह्नयोवह्नयस्तर्कास्त्रास्सुगास्त्रग्नयोधरा ६४ सिन्ध-
वोवह्नयश्चाऽक्षास्त्रास्सुगास्त्रन्तकः करः मार्गणाः
केवलश्चन्द्रोऽथाब्धयोऽथाब्धयोग्नयः ६५ ईशास्त्र-
क्षिश्चयुग्मश्चवह्नयोवह्नयोब्धयः खाभ्रचंद्राश्च

मू २ उ २ रे ३२
युग्मश्च युग्मश्चाऽक्षिगुणाः क्रमात् ६६ ऋक्षाणां
अश्वि
दस्रपूर्वाणांतारकाण्युदितानिहि

नक्षत्राणामगस्त्यादीनांच भून्या भुक्तिस्तज्ज्ञान
येषांनैवोदिता भुक्तिस्तेषांभून्यागतिर्भवेत् ६७

## ताराणामण्डकक्षालोकपरिधियोजनानयनम्

३६०० ३०८७८१ ६
भूमेः प्रस्फुटबिम्बघ्नाः क्षगागाष्टखवह्नयः तर्कास-
नक्ष १* १८५२६८६००
स्तारकाणांतु ज्ञेयाः कक्षाण्डयोजनाः ६८ । ११०३

श्रीलक्ष्मीवल्लभात्मजप्रेमवल्लभविरचितेपर-
मसिद्धान्तेबाणापक्रमानयनाधिकारः सप्तमः

---

## व्यक्षेस्वस्वदिनार्द्धानयनम्

भूव्यासयोजनार्द्ध ५७२।५४ ५७।१५।४२ घात ३२८२४।१८।२० अ
भूव्यासयोजनार्द्धघ्नाः पूज्याशाश्चविभाजिताः खे-
व्यास ज्यार्द्ध
टलोकाऽर्द्धविस्तारयोजनैः स्याज्ज्यकादलम् १ त
२ ज्या ६
द्धिघ्नसिञ्जिनीज्ञेया तस्याः कोट्यंशषट्लवम् स्या-

---

१* तारालोकाण्डपरिधिकक्षायोजनाः १८५२६८६०० तद्व्यासयो-
जनाः ५८९७२०८८ अर्द्ध २९४८६०४४.

घस्थाद्रिघ्नं घ्न दिना.
लिप्ताप्राङ्गि-जव्यक्षघस्त्राऽर्द्धंव्यावहारिकम् २ तारा-
२९४८६०४४. घ्न लोकव्यासार्द्ध
लोकस्यविस्तारखण्डयोजनपूर्वकम् खेटकक्षाऽर्द्धवि-
ही
स्तारयोजनैः परिवर्जितम् ३ कृत्वाशेषोच्यतेतेननि-
५७२।५५ २९४८६०४४
घ्नं भूविस्तृतेर्द्दलम् तारालोकाऽर्द्ध विस्तारयोजनैर्भा-
१* ११४।३५।२४ घ्न
जितंफलम् ४ चक्रव्यासलवाभ्यस्तं भक्तंतत्खेचर-
लोकव्यासार्द्ध फल
स्यच लोककक्षार्द्ध विस्तारयोजनैर्ज्यांशकाः स्मृताः
जीवाचक्रव्यासयोर्योगान्तरघातस्यमूलेनोनचक्रव्यासरूत्वातस्यार्द्धंवाणःस्यात्
५ ज्यांशानांयच्छरं भागपूर्वंतेनविमर्द्दितम् खेट
लोकव्यासार्द्ध ५७।१७।४२
लोकस्यविष्कम्भखण्डयोजनपूर्वकम् ६ चक्रव्यास
फलं
दलांशासंयुक्त्वाशेषाख्ययोजनैः शेषस्फुटोच्यतेतेन
११९५।५४ ५८९७२०८८
निघ्ना· भूव्यासयोजनाः ७ तारालोकस्य विस्तारयो-
५७।१७।४२ घ्न
जनासाश्चतत्फलम् चक्राऽर्द्धव्यासभागघ्नंखेटलो-
लोकव्यासार्द्ध योजनैः फलम्
कदलस्यच ८ विष्कम्भयोजनैर्भक्तंज्याऽर्द्धद्विघ्नं

---

१ * चक्रव्यासांशा ११४।३५।२४ च· व्यासपिं ४१२५२४ भूव्य· ५७।१७।४२ भू· पलापिंडं २०६२६२. ६।४० पलभादेशेपलकर्णः १३।४३।३९।१ तोटकम् ३१।४९।५० अनेन हत्वा केदारेण भक्त्वाचारकंस्यात् वालंवज्ययाभक्तं चक्रव्यासं फ· १।८।३८।१५ अनेनतोटकं हत्वाकेदारेणाभक्त्वाचारकंस्यात् तथा६।४० पलभादेशे०।३३।२०।१ तोटकं हत्वाफलंस्यात् तत्पूज्यघ्नंकैराक्षचारकंस्यात् ६।४० पलभादेशेलव ज्या १००।१०।११।२ लंबज्यार्द्धपला १८०३०५।३१ अक्षांश २९।३।०ज्या५५।३९।० ज्यार्द्ध २७।४९।३०

भ ६० फलं
भवेज्ज्यका तस्या बाहुलवास्तर्कैर्भक्ताश्चासकला-
१५ अ दिनार्द्ध
द्विकम् ९ हित्वापक्षेन्दुलिप्तास्तु स्वव्यक्षाऽहर्द्दलंभवे
अ
त् खेटानामण्ड वृत्तंतु कक्षालोकोऽण्डउच्यते १०

अथसूर्यादिग्रहाणांचक्राऽहोरात्राऽधिका-
होरात्रदेशोद्युमानरात्रिमानानयनंचरकर्मणि

क्रां पलांश ९०
क्रान्त्यंशाऽक्षांशसंयोगखांकोर्द्धं यत्रजायते तत्रत-
चरकर्म विधिना क्रां
च्चरस्मार्गेणनानयेत्तच्चरंबुधः ११ अक्षांशाऽपमभा-
९० क्रां
गैक्यंचेदूर्द्धं खांकतोभवेत् क्रान्तेर्लम्बांशतुल्यायाः
क्रां
पूर्णकालाद्दिनादिकम् १२ कालमन्त्याऽपमंयावः
अ क्रां क्रां क्रां
द्यद्भवेत्तदहस्यतु वृद्धिपक्षेऽथतद्ध्रासपक्षेऽन्त्यक्रा
लम्बांशो तुल्य क्रां
न्तिकालतः १३ लम्बभागैस्समक्रान्तेःपूर्णयावद्दि
योग
नादिकम् कालंयज्जायंतेयोगंकालयोरुभयोस्तयोः
दिनमानोऽस्यते उ: क्रां देवांशो
१४ घस्रमानोच्यतेसौम्यापक्रमेनिर्ज्जरांशके
द: क्रां दिनमान रात्रिमान
याम्याऽपक्रमजंघस्त्रदेवांशेयामिनीभवेत् १५
रा दि १*
स्याद्दैत्यांशाक्षितौव्यस्तंयामिनीदिनयोर्मिथः

---

* १ सू ऽधिगतौसूव्यक्षदिनार्द्ध १४।५९।१९ सू· मध्यगसौसू-

लम्बांशानयनम्. स्वाक्षांशा न्स्वांकतोहित्वा लम्बांशाः समुदीरिताः १६ मेरुव्यक्षान्तरं देशं देवांशं परिकीर्त्तितं व्यक्षाद्दैत्यालयं यावद्देशं दैत्यांशमीरितम् १७ देवानामयनिशामानं तद्द्युमानं सुरद्विषाम् अथषष्ट्यल्पकलाह्नमानरात्रिमानदेशेचरानयनम्. प्रस्फुटाऽपक्रमांशानांचक्र ज्याऽ

---

व्यक्षदिनार्द्धं १४।५९।२२ सू. अल्पगतौस्. व्यक्षादिनार्द्धं १५।० पृथ्वीप्रस्फुटबिम्बघ्नाः दिग्युग्मोरगयोजनाः सत्यवेग घटी भक्ताः लोकव्यासदलोच्यते घातं २९५५६००० चंद्राधिगत्यंशाः १४।२१ चंद्राधिगतौचंद्रव्यक्षदिनार्द्ध घ. १४।५०।२७ चं.मध्यगतिः १३।१०।३५ तत्र चं. व्यक्षदिनार्द्धम्१४।५१ अल्पगतिः १२।० तत्रचं. व्यक्षादिनार्द्धं१४।५३।२

---

* १ तत्रवृद्धिपक्षक्रांतेर्यस्मिन्कालेतद्ग्रहस्य स्फुट क्रान्तिः स्वदेशलम्बांश समो भवति तस्मात्कालात्तद्ग्रहस्य अन्त्यक्रान्तिंयावत् अर्थात् ह्रासपक्षारम्भंयावद्यत्कालं तत्पूर्वाह्णं स्यात् ह्रासपक्षक्रांतेःप्रारम्भकालात्स्वदेशस्य लम्बांशतुल्यक्रांतेः पूर्णयावत्कालं तद्पराह्णं स्यात् पूर्वाह्णापराह्णयो र्योग मुत्तरक्रान्त्युत्थ देवांशे दिन मानंस्यात् दक्षिणक्रान्त्युत्थदेवांशेरात्रिमानंस्यात् याम्यक्रान्तिजं दैत्यांशे दिनमानं स्यात् सौम्यक्रांतिजं दैत्यांशे रात्रिमानंस्यात् लंबांशाल्पक्रांतौ न्चरमार्गेण न्चरमानयेत् तत्संस्कृतं तद्ग्रहव्यक्षदिनार्द्धं स्पष्ट दिनार्द्धं स्यात् एकभज्या ५७।१७।४२ क्रांतिकर्ण २३।१८।१४ गुणितापूज्य भक्ता ५७।१७।४२ फलंज्या. २३।१८।१४ तस्याः भु. ११।२४।२ हरः ११२।११।२१ निजंज्या ५३।२७।४२ भुजांशाः २७।४८।३८ खाङ्क १० घ्नाः व्यक्षेमेषमीन तुलाकन्यालग्नमानंपलादिकं २७८।६।२० द्विभज्या ९९।१४।१५ क्रांतिकर्णगुणितापूज्य भक्ताफलंज्या ४०।२१।४८ तस्याः भुजांशाः

ऽर्द्धलवादिकम् १८ प्रस्फुटक्रान्तिदिक्कन्तु तोटकं स्याल्लवादिकम् क्रान्त्यंशनाममात्रेतुज्ञेयाः क्रान्त्यंशकाः स्फुटाः १९ केरकेदारकेरकद्युज्यार्द्धज्ञानं प्रस्फुटाऽपक्रमांशोनस्वकं भागज्यकादलम् केरंस्यात्तच्चकेदारंकेरकंचांशकादिकम् २० कुन्दधारकज्ञानम्. लम्बांशज्यादलंकुन्दं कथ्यते तच्चधारकम् चरकलानयनम्. व्यक्षादुत्तरसंस्थानांस्वगोलंद्युत्तरंभवेत् २१ व्यक्षतोदक्षिणस्थानात्स्वगोलंदक्षिणम्भवेत् चारकक्कर्द्दकानं.

पलभा ५७।१७।४२ १२फलं

अक्षभागुणितपूज्यशक्कामंतोटकाहृतम् २२ केरासंक्रान्तिदिक्कतुचारकंप्रस्फुटंभवेत् अक्षांशज्यादलेन भ्रंतोटकंधारकोद्धृतम् २३ विज्ञेयंक्कर्द्दकं

---

२०।३७।२८ हरः १०७।१४।४४ निजज्या ९६।५१।५९ भुजांशाः ५७।४२।२७ रवोंक्षघ्नाः ५७७।५।३० एकभोत्थे २७८।६।२० नहीनाः सिंहवृश्चिकवृषकुंभानां मानंपलादिकम् २९८।५८।१० त्रिभज्या ११५।३५।२४ क्रांतिकर्णगुणाघ्नज्या साफलज्या ४६।३६ २८ तस्याः भुजांशाः २४।०।० हरः १०४।४०।५९ निजज्या ११५।३५।२४ तस्याः भुजांशाः ९०।०।० दिग्घ्ना ९०० द्विभोत्थेनहीना ३।५।१०।९। ५७७।५।३० मि०का० म० ध० मानप० ३२२।५५।३० मानपलादिकम्

क्रान्तिदिक्कभागमुखबुधैः तोटकंपलभानिघ्नंशंका
संक्रान्तिदिग्गतं २४ ज्ञेयंकर्ईकसाक्षीकमंकमंशा-
दिकंतथा चक्रव्यासदलांशाघ्नंकर्ईकंभागपूर्वकम्
२५ केशसंक्रान्तिदिक्कस्याच्चारकंतल्लवादिकम्
ताहिघ्नंस्याज्ज्यकातस्या बाहुशांगांशकंचरम् २६
लिसाद्यंक्रान्तिदिक्कस्यात्स्वर्णंतत्स्वाऽन्यगोलजम्
स्वव्यक्षाऽहर्हलेदत्वातच्चरद्युदलं भवेत् २७ स्व-
दृग्वृत्तोदयाऽस्तोत्थरवेचरोत्थचरोद्भवौ योस्तःस्वद्यु
दलावैक्यंतयोःस्वद्युमितिर्भवेत् २८ स्वद्युमानघटी
हीनखांगस्यात्स्वक्षपामितिः

## अथनतोन्नतकलानयनम्

कालमह्नदलाद्यातपश्चात्तन्नतमुच्यते २९ तन्नतं
खत्रिंतस्त्यक्त्वातत्पश्चादुन्नतंभवेत् एवंरात्रिदला-
द्यातंकालंपूर्वोन्नतंभवेत् ३० पूर्वोन्नतंवियद्रामा-
च्छित्वातत्प्रोङ्नतंभवेत् अथचरखण्डानयनम्.
खाग्नीनांभुजभागानांक्रान्त्युत्थंयच्चरंभवेत् ३१

तत्पूर्वञ्चरखण्डः स्यात्तद्दत्षष्टिभुजांशकैः यच्चरंद्वि
भजं ज्ञेयं तद्दत्खांकभुजांशकैः ३२ यच्चरं त्रिभजं
ज्ञेयमथनेत्रभजेचरे हित्वातत्प्रथमखण्ड मध्य-
खण्डतदुच्यते ३३ तच्चरेत्रिभजे हित्वा तञ्च नेत्रभ-
जंचरम् अन्त्याख्यश्चरखण्डः स्याल्लिप्तिकापूर्वकः
खलु ३४ अथव्यक्षोदयानयनम्
एकभज्याद्विभज्याथत्रिभजीवाचमाहिता क्रान्ति
श्रवणभागैस्तु चक्रव्यासार्द्धभाजिता ३५ ज्यास्या-
त्तस्यास्तुदोर्भागान्व्योमांकात्परिवर्जितम् कृत्वा
शेषांशजाश्चोर्वीस्वस्वराशिहरोच्यते ३६ त्रिभोत्थे-
नहरेणघ्नास्वस्वहारविभाजिता एकभज्याद्विभ-
ज्याचत्रिभज्यास्याभिजज्यका ३७ तस्या बाहुल-
वाः खाङ्कैर्निघ्नाः स्युः स्वभजाः पलाः मेषात्यघटक-
न्यानामेकभोत्थपलादिकम् ३८ मानंव्यक्षस्थले
ज्ञेयंतद्विभोत्थपलादिषु हित्वासिंहालिगोकुम्भ
राशीनांमानमुच्यते ३९ त्रिभजनेत्रभोत्थेनवर्जि-

तंविकलादिकम् इदं कच्छपनक्राऽश्विराशीनाम्मि
तिरुच्यते ४० षष्ट्याप्ता विकलालिप्ताश्चज्ञेयाः प-
ण्डितोत्तमैः अथस्वदेशलग्नोदयकलानयनम्
एकनेत्रत्रिराशीनांक्रमशोत्क्रमसंस्थिताः ४१ मित-
यश्चररवण्डैस्तुक्रमशोत्क्रमतः स्थितैः हीनाढ्याः
क्रमशोमेषाज्जूकतश्चोत्क्रमस्थिताः ४२ निजदे-
शोदयाः प्रोक्ता लिप्ताद्याः पण्डितोत्तमैः अंगना
जूकयोर्मानंतुल्यंवृश्चिकसिंहयोः ४३ चापकर्कद-
योर्नक्रद्वयोर्वृषकुम्भयोः स्यान्मेषांत्यभयोश्चस्व
देशेव्यक्षेतथैवच ४४ चाक्रयज्ञानंस्पष्टदिनज्ञानं
व्यक्षदेशोदयाश्चैव स्वोदयाश्चररवंडकाः जायन्ते
खलुवार्ष्यगाः स्याच्चरोत्थद्युमानकम् ४५ चरजं
रात्रिमानंचवार्ष्यगंन्चाऽत्रतच्चरम् सर्वेषांचरजं
घस्त्ररवण्डाद्यं स्फुटं भवेत् ४६ गुप्तघस्त्रेष्टजंव्य-
क्तंप्रस्फुटाऽह्नसमंभवेत् व्यक्तंगुप्तदिनार्द्धोत्थं
स्यात्स्फुटाऽह्नार्द्धसम्मितम् ४७ लग्नैक्यज्ञानम्

म· १॥ व्यक्षोदयाः षष्टिभक्ताः लिप्ताद्याः स्युः मे=७८।६।२० वृ २९८।५८।१०
मि ३२२।५५।३० क ३२२।५५।३० सिं २९८।५८।१० क २७८।६।२०

